

आनन्दमात्रमकरन्दमनन्तगन्धं योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम् ।
वेदान्तसूर्यकिरणैकविकासशीलं हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ १ ॥

# अथ विनायकमाहात्म्यस्थाध्यायचरितानुक्रमः ।

श्रीगणेशाय नमः ॥  ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमु-
[1]दीरयेत् ॥ १ ॥ स्कन्द उवाच ॥ शिव शंभो महेशान सर्वज्ञ सुखदायक ॥ आख्यानानि सुपुण्यानि
श्रुतानि त्वन्मुखाम्बुजात् ॥ २ ॥ विचित्राणि पवित्राणि सर्वाघशमनानि च ॥ शाक्तशांकरसौराणि
बहूनि वैष्णवानि च ॥ ३ ॥ येषां श्रवणमात्रेण पलायन्ते महापदः ॥ पुरुषार्थाः प्रसिध्यन्ति महादेव
जगत्पते ॥ ४ ॥ तथापि तृप्तिं नो यामि [2]पायंपायं सुधामिव ॥ अतस्त्वं कृपया ब्रूहि गणेशचरितं मम
॥ ५ ॥ अवतारान्सेतिहासान्सर्वकामप्रपूरकान् ॥ [3]शरण्यानस्य लोकस्य वक्तुमर्हसि शंकर ॥ ६ ॥
॥ ॥ शिव उवाच ॥ सम्यक्पृष्टं त्वया स्कन्द सर्वसंतोषकारकम् ॥ गणेशचरितं वक्ष्ये सेतिहासं तवानघ
॥ ७ ॥ निर्गुणो निरहंकारो निर्विकल्पो निराकृतिः ॥ निरामयो निरीहो यो गणेयोऽसौ निगद्यते
॥ ८ ॥ अरूपो रूपवांश्चैव नानारूपधरस्तथा ॥ भक्तिगम्यस्वरूपोऽसौ ज्ञानगम्यस्वरूपवान् ॥ ९ ॥
सूर्यविष्णुस्वरूपोऽसौ शक्तिशंकररूपधृक् ॥ मरुद्भिः स्तूयमानोऽसौ ब्रह्मविष्णवादिभिस्तथा ॥ १० ॥

१ उत्कर्षेण कथयेदित्यर्थः । २ पुनःपुनः पीत्वा । ३ शरणे साधून् रक्षितृंश्च ।

चराचरहितार्थाय नानारूपावतारवान् ॥ तत्राद्यमवतारं ते कथयामि षडानन ॥ ११ ॥ कदाचि-
त्प्रलये जाते प्लवीभूते जगत्त्रये ॥ योगशायी निराकारो गुणातीतो निराश्रयः ॥ १२ ॥ चिदानन्दघनो
नित्यः स्वप्रकाशो जगन्मयः ॥ योगिगम्योऽगम्यरूपो गम्यागम्यस्वरूपधृक् ॥ १३ ॥ चक्रे[1] स ईक्षां पुरतो
विभाय[2] च प्रतापवान् ॥ मत्तो भिन्नं न चेहास्ति बिभेम्यहमतः कुतः ॥ १४ ॥ एकाकिता न युक्तेति बहुस्या-
महमात्मनः ॥ इति मत्वा ससर्जाग्रे रजः सत्वं तमस्तथा ॥ १५ ॥ गुणैस्त्रिभिस्त्रिधाभूतो ब्रह्मविष्णुशि-
वात्मकः ॥ यद्रूपं रजसा भूतं ब्रह्मेति प्रथितं तथा ॥ १६ ॥ स्मृत्यागमपुराणानि श्रुतिशास्त्राण्यनेकशः ॥
विद्याश्च बहुधा तस्मै कथयामास सादरम् ॥ १७ ॥ स आदिदेश सृष्टिं त्वं कुरु ब्रह्मन्ननेकधा ॥
सृष्टिं कुरु विचित्रां त्वमित्याज्ञप्तः प्रजापतिः ॥ १८ ॥ सृष्ट्यर्थमुपचक्राम तदा विघ्नैर्बभूविरे[3] ॥ कश्चिदा-
कर्षते तं वै कश्चिदाकर्षते कचान् ॥ १९ ॥ नानाविधान्भीतिकरान्सुश्रुवे घोरनिःस्वनान् ॥ केचिच्चक्रुस्त-
लाघातान् केचिद्दुन्दुभिनिःस्वनान् ॥ २० ॥ दृश्यादृश्यशरीरांस्तान्न शशाक निवारितुम् ॥ ब्रह्माथ

१ 'स ईक्षत लोकान्नु सृजा' इति श्रुतिमर्थतः पठति । २ विभवायेति पाठे जगत्सर्जनार्थम् । ३ विघ्ना बभूवुरिति स्यात् ।

चिन्तयामास किमेतत्समुपस्थितम् ॥ २१ ॥ ॥ ब्रह्मोवाच ॥ आरम्भो मे वृथाभूत आज्ञा च परमात्मनः ॥ अन्तर्धानं गतः सोऽपि परमात्मा निजेच्छया ॥ २२ ॥ किं करोमि क्व याम्यद्य किं वदामि विभुं प्रति ॥ ॥ शिव उवाच ॥ इति चिन्तातुरो ब्रह्मा स्मरणात्परमेशितुः ॥ सावधानमना भूत्वा प्रार्थयामास चेश्वरम् ॥ २३ ॥ तेजोरूपमनिर्वाच्यमप्रमेयं पुरातनम् ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ त्वदाज्ञया प्रवृत्तोऽहं सृष्टिं कर्तुं चराचरम् ॥ तत्र विघ्नगणा भूता वारणीयास्त्वया विभो ॥ २५ ॥ नाहं शक्तो वारयितुं वेदशास्त्रगणैरपि ॥ ॥ शिव उवाच ॥ इति श्रुत्वा वचो ब्राह्मं परमात्मा दयानिधिः ॥ आविर्बभूव तस्याग्रे उपदेशं चकार तम् ॥ २६ ॥ वक्रतुण्डस्य[1] यो मन्त्रस्तं ददौ ब्रह्मणे तदा ॥ उवाच च प्रसन्नात्मा मन्त्रोऽयं सिद्धिदायकः ॥ २७ ॥ ॥ विनायक उवाच ॥ प्रसाद्य देवतामस्य कुरु सृष्टिं ततः परम् ॥ ॥ शिव उवाच ॥ इति श्रुत्वा तदा ब्रह्मा मुदा परमया युतः ॥ २८ ॥ हर्षेणोत्फुल्लनयनस्तपस्तप्तुं जगाम ह ॥ दिवारात्रं जपन्मन्त्रं वक्रतुण्डस्य सिद्धिदम् ॥ २९ ॥ वक्रतुण्डं सदा ध्यायन्नाम तस्यैव संस्मरन् ॥ एवं द्वादश

---

१ ॐ नमो वक्रतुण्डायेति मन्त्रो ज्ञेयः ।

वर्षाणि चकार तप उत्तमम् ॥ ३० ॥ ध्यानाज्जपाच्च संप्रीतो निजनामग्रहादपि ॥ करुणाब्धिर्वक्रतुण्डस्तं ययौ भक्तवत्सलः ॥ ३१ ॥ रक्तो रक्तक्रूरनेत्रो गजास्यः सिन्दुरारुणः ॥ चन्द्रायुतप्रभो नित्यः कोटिसूर्यसमद्युतिः ॥ ३२ ॥ तेजसा व्याप्तत्रैलोक्यश्चक्षुषा लक्ष्यमगात् ॥ उग्रं रूपं तदा किंचिद्दृष्ट्वैव भयमाययौ ॥ ३३ ॥ विसस्मार जपं ब्रह्मा द्विगुणं चिन्तितो[1]ऽभवत् ॥ मूर्छामवाप महतीं सावधानः क्षणादभूत् ॥ ३४ ॥ तुष्टाव सुस्थिरो भूत्वा तेजोरूपं निजेष्टदम् ॥ ॥ ब्रह्मोवाच ॥ जय नित्यपरानन्द जगद्योने नमोनमः ॥ ३५ ॥ नमः सत्त्ववते तुभ्यं विष्णुरूपाय ते नमः ॥ तामसे शिवरूपाय गुणातीताय ते नमः ॥ ३६ ॥ स्वाहास्वधावषट्कारविश्वरूपाय ते नमः ॥ तमुवाच ततो ब्रह्मा स्तुत्वैवं तेजसां निधिम् ॥ ३७ ॥ करुणां कुरु देवेश दुःखितस्य मम प्रभो ॥ इहापि सृष्टिकार्येऽपि विघ्ना जाता विभो मम ॥ ३८ ॥ इदानीं रक्ष मां दीनमनाथं शरणागतम् ॥ ॥ शिव उवाच ॥ इति श्रुत्वा वचस्तस्य तमुवाच परः पुमान् ॥ ॥ वक्रतुण्ड उवाच ॥ ३९ ॥ यं ध्यायसि दिवा रात्रौ यस्त आदिष्टवान्पुरा[2] ॥ योगाभ्यासेन

१ चिन्तायुक्तोऽभवत् । २ अत्र सएवाहमित्यग्रिमश्लोकेन योजनीयम् ।

वीक्ष्यन्ते मामेव सनकादयः ॥ ४० ॥ मत्तः परतरं किंचिन्नेक्षंते[1] न च शृण्वते ॥ स एवाहं तव प्रीतस्तपसानेन चारुणा ॥ ४१ ॥ वरं दातुं समायातश्चिन्तां मा कुरु सर्वथा ॥ यन्नाम वक्रतुण्डेति सोऽहं प्रीतस्तवाधुना ॥४२॥ वरं वरय दास्येऽहं यत्ते चित्तेऽभिवर्तते ॥ ॥शिव उवाच॥ श्रुत्वैवं वरयामास वरान्ब्रह्मा हृदि स्थितान्म् ॥ वक्रतुण्डमुवाचेदं करुणाकरसागरम् ॥ ४३ ॥ ॥ब्रह्मोवाच॥ यदि तुष्टोऽसि देवेश वक्रतुण्ड मम प्रभो ॥ देहि मेऽद्भुतसामर्थ्यं जगतः सर्जनाय वै ॥ ४४ ॥ अचलां तव भक्तिं च नानाकार्येष्वविघ्नताम् ॥ इत्युक्तो ब्रह्मणा देवो ददौ तस्याभिकाङ्क्षितम् ॥ ४५ ॥ ॥ वक्रतुण्ड उवाच ॥ त्वया यत्प्रार्थ्यते ब्रह्मंस्तदस्तु सकलं तथा ॥ सामर्थ्यं सृष्टिकरणे भविष्यति तवाद्भुतम् ॥ ४६ ॥ अन्यं वरं प्रदास्यामि मम भक्तिः सदास्तु ते ॥ विघ्नाश्च प्रशमं यान्ति मत्प्रसादात्प्रजापते ॥ ४७ ॥ ॥ शिव उवाच ॥ लब्ध्वा वरान्ददौ तस्मै ब्रह्मा स्वे मानसे[2] शुभे ॥ सिद्धिबुद्धीति विख्याते कन्यके वरदायिने ॥४८॥ ब्रह्मदत्ते तदा कन्ये गृहीत्वान्तर्हितस्तदा ॥ वक्रतुण्डोऽथ ब्रह्मापि निजं स्थानं ययौ तदा ॥ ४९ ॥ ससर्ज विविधां

१ सनकादय इति योज्यम् । २ स्वमनःसमुद्भूते ।

सृष्टिं निर्विघ्नेन प्रजापतिः॥५०॥ ॥ स्कन्द उवाच ॥ वक्रतुण्डाभिधां प्राप्तः कथं देवो वदस्व मे ॥ यत्कथा-
श्रवणादेनः क्षयं याति पुरा कृतम् ॥५१॥ ॥ शिव उवाच ॥ सम्यक्पृष्टं त्वया स्कन्द शृणुष्वैकाग्रमानसः
॥ ५२ ॥ वक्रतुण्डेति नामाभूद्येन तत्कथयामि ते ॥ कार्यविध्वंसिनो ये ये वक्रास्ते समुदीरिताः ॥ ५३ ॥
वक्रांस्तुण्डेन यो हन्ति वक्रतुण्डः स ईर्यते ॥ स एवाज्ञापयामास विष्णुं सत्वस्वरूपिणम् ॥५४॥ ॥ वक्रतुण्ड
उवाच ॥ जगतः पालनं विष्णो कुर्वनेकप्रयत्नतः॥ तमोरूपिणमाहाथ त्वं हरो हरणाय वै॥५५॥ ॥शिव
उवाच ॥ वैनायकोऽयमिति ते महिमा कथितोऽद्भुतः ॥ वक्रतुण्डावतारश्च प्रथमः कथितो मया ॥५६॥
सर्वपापहरः सर्वलोकानां हितकारकः ॥ य इदं शृणुयाद्भक्त्या वैनायकचरित्रकम् ॥ ५७ ॥ विघ्नास्तस्य
शमं यान्ति सर्वान्कामानवाप्नुयात् ॥ ५८ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये स्कन्दशंकरसंवादे
वक्रतुण्डावतारकथनं नाम प्रथमोऽध्यायः ॥ १ ॥ ॥ ॥ ॥
॥ ॥ स्कन्द उवाच ॥ चिन्तामणिरिति ख्यातिं कथं यातो विनायकः ॥ तदहं श्रोतुमिच्छामि कथयस्व
प्रसादतः ॥ १ ॥ ॥ शिव उवाच ॥ कथयामि कथां रम्यां चिन्तामणिप्रशंसनीम् ॥ सर्वपापप्रशमनीं

सादरं शृणु षण्मुख ॥ २ ॥ द्राविडे विषये श्रेष्ठो राजाभूदभिजित्पुरा ॥ श्रौतस्मार्तक्रियासक्तो ध्याननिष्ठो जितेन्द्रियः ॥ ३ ॥ पञ्चयज्ञरतो नित्यं देवतातिथिपूजकः ॥ इन्द्रादिदेवतामान्यः शूरः सत्यपराक्रमः ॥ ४ ॥ शस्त्राण्य[1]स्त्राण्यनेकानि यो बिभर्त्यरिसूदनः ॥ यशसा चैव कीर्त्या च विख्यातो भुवनत्रये ॥५॥ पूर्णकोशः कुबेराप्तलक्ष्म्या जुष्टो हरिप्रियः ॥ गजानां च हयानां च रथानां च पदातिनाम् ॥ ६ ॥ सहस्राणि प्रधावन्ति यस्याग्रे गच्छतः सदा ॥ एवं स विजयी राजा शशास पृथिवीमिमाम् ॥७॥ भार्या गुणवती चास्य पातिव्रत्यरता सदा ॥ रूपलावण्यसंयुक्ता तस्य चित्तानुयायिनी ॥ ८ ॥ धर्मशीला दानरता नित्यं चातिथिपूजका ॥ देवार्चनरता नित्यं सर्वदा सत्यभाषिणी ॥ ९ ॥ अनपत्यमुदासीनं राज्यधर्मे नराधिपम् ॥ दृष्ट्वा गुणवती साथ उदासीना बभूवह ॥ १० ॥ व्रतदानान्यनेकानि जपहोमाननेकशः ॥ तुलापुरुषदानानि महादानानि षोडश ॥ ११ ॥ अन्नदानानि पुत्रार्थमभिजिदकरोत्तदा ॥ एवं धर्मरतस्यापि पुत्रो नाभून्महीपतेः ॥ १२ ॥ अथ तौ दंपती स्कन्द अनपत्यौ सुदुःखितौ ॥ चिन्तया-

[1] अस्त्राण्यस्त्रप्रयोगसंहारक्षममन्त्रान् ।

मासलुरुभावावाभ्यां किं कृतं पुरा ॥१३॥ ॥ दंपती ऊचतुः॥ वृथा राज्यमिदं जातमावयोर्जन्मनी वृथा ॥ अपुत्रस्य न च स्वर्ग आवयोः का गतिर्भवेत् ॥१४॥ ॥ शिव उवाच ॥ विचिन्त्यैवं ततो राजा वनं यातुमुपाक्रमत् ॥ राज्यं दण्डं च कोशं च प्रधानेषु न्यवेशयत् ॥ १५ ॥ तेषामाज्ञां गृहीत्वाथ सपत्नीको वनं ययौ ॥ अनुयातो नागरिकैः कृतस्वस्त्ययनो द्विजैः ॥ १६ ॥ कृत्वा प्रदक्षिणां तेषां नमस्कृत्य ययौ पुरः ॥ देशाद्देशान्तरं गत्वा बभ्राम स वेनवने ॥१७॥ कदाचित्स ददर्शाथ सपत्नीको द्विजाश्रमम् ॥ बहुच्छायं रम्यजलं बहुवृक्षसमन्वितम् ॥१८॥ बहुवृक्षसमाकीर्णं बहुशिष्योपशोभितम् ॥ वेदघोषसमायुक्तमग्निहोत्रविराजितम् ॥ १९ ॥ द्विजपत्न्या सुचार्वङ्ग्या रम्यं लक्ष्म्येव शोभितम् ॥ उपागम्याश्रमं तं स वैशंपायनमैक्षत ॥ २० ॥ सपत्नीकः पुरस्तस्य दण्डवन्निपपातह ॥ ध्यानं विसृज्य स मुनिः प्राह तं पृथिवीपतिम् ॥२१॥ ॥ वैशंपायन उवाच ॥ उत्तिष्ठ तव किं नाम कोऽसि त्वं पुरुषर्षभ ॥ किमर्थमिह चायातः कथयस्व ममाग्रतः ॥ २२ ॥ ॥ शिव उवाच ॥ इत्युक्तोऽप्यभिजिद्राजा नोत्तस्थौ भृशदुःखितः ॥ क्षणं ध्यात्वा सोऽथ मुनिः पुनः प्राह नराधिपम् ॥ २३ ॥ ॥ मुनिरुवाच ॥ उत्तिष्ठ दुःखहेतुस्ते मया ज्ञातो

न संशयः ॥ पुत्रस्ते साधु भविता वद वां नामनी मम॥२४॥ ॥ श्रीशंकर उवाच ॥ एवं वाक्यं मुनेः
श्रुत्वा जहर्ष स स्त्रिया सह ॥ उत्तस्थौ च नमस्कृत्य नामनी प्राह तं द्विजम् ॥ २५ ॥ ॥ अभिजिदु-
वाच ॥ स्त्रिया गुणवती नामाभिजिन्नामापि मे मुने ॥ ऋषीणामनृतं वाक्यं नेक्ष्यते जगतीतले ॥२६॥
इति ज्ञात्वा सहर्षोऽहमुत्थितस्तव वाक्यतः ॥ कथं मे भविता पुत्रोऽनुग्रहाद्वक्तुमर्हसि ॥ २७ ॥ ॥
श्रीसाम्ब उवाच ॥ इत्युक्तः स मुनिः प्राह सपत्नीकं नराधिपम् ॥ सिन्धुतीरे साधुजलं सर आस्ते
सुशोभनम् ॥२८॥ कन्दमूलफलोपेतं सुपुष्पं सुसमित्कुशम् ॥ तत्र गत्वा जपं होमं कुरुष्वैकाग्रमानसः
॥ २९ ॥ पत्नीयमुपसंभारांस्तव दास्यति सुव्रता ॥ चतुर्मासान्कुरुष्वैवं गच्छ पश्चान्निजं पुरम् ॥ ३० ॥
कुरु राज्यं धर्मपत्न्या द्विजान्पौरांश्च पालयन् ॥ एवं कृते महाराज भवेत्पुत्रो न संशयः ॥ ३१ ॥ ॥
शिव उवाच ॥ इत्युक्तः सोऽभिजिद्राजा सपत्नीको मुनिं पुनः ॥ प्रणनाम ननामाथ भार्या गुणवती तथा
॥ ३२ ॥ तयोराज्ञां गृहीत्वा तौ ययतुः सर उत्तमम् ॥ तेनोक्तं कुरुते चाथ जपहोमादिकं नृपः ॥३३॥
ब्रह्माथ ददृशे तेन तपोनिष्ठः परेहनि ॥ ब्रह्मणोप्युपसंभारान्कल्पयन्ती सरस्वती ॥३४॥ विद्यानामादि-

कर्त्री सा लावण्यलहरी शुभा ॥ यन्मौलिकेशसौभाग्यजितसौभाग्यकान्कचान् ॥ ३५ ॥ पृष्ठतो दधते
ऽद्यापि चमर्यो वनसंश्रयाः ॥ यन्नेत्रशोभासंप्राप्त्यै चकोरोऽग्निं निषेवते ॥ ३६ ॥ अलिकेन जितो याति
दूरदेशं तमेव वा ॥ अनुयातीति मत्वायं चन्द्रो देशान्तरं गतः ॥ ३७ ॥ प्रतिमाव्याजतोप्यस्याः सेवते
मुखमुज्ज्वलम् ॥ सेवमानोपि वहते चिन्तामतिगरीयसीम् ॥ ३८ ॥ अन्यथा क्षयिता कल्या श्यामता
चौषधीपतौ ॥ मन्दाकिन्योपमीयेत सुमेरुश्चेत्परो भवेत् ॥ ३९ ॥ हारयष्टिः सरस्वत्यास्तस्यास्तनविहा-
रिणी ॥ यद्गतिप्राप्तये हंसाः कुर्वते जलसेवनम् ॥ ४० ॥ वनवासं कोकिलाद्याः कुर्वतेऽस्याः स्वनाप्तये ॥
संकोचिताथ कमले कुमुदेवा नचेद्भवेत् ॥ ४१ ॥ पादयुग्मं सरस्वत्या यास्यत्युपमितिं तयोः ॥ तया
सख्यं समभवद्गुणवत्या नृपस्त्रिया ॥ ४२ ॥ सममाजह्रतुः कन्दफलमूलसमित्कुशान् ॥ कदाचिद्ब्रह्मणो-
प्यङ्कंजगाम सा सरस्वती ॥ ४३ ॥ विस्रस्तवसना साथ न शशङ्के पितुस्तदा ॥ जपांते ददृशे धात्रा
सुरूपा सा सरस्वती ॥ ४४ ॥ आकर्णनयना रम्यवदना यौवने स्थिता ॥ ब्रह्माथ विमना भूत्वा
तर्कयामास चेतसि ॥ ४५ ॥ ॥ ब्रह्मोवाच ॥ रम्भेयं वा रतिर्वा नु सकामा मामुपागता ॥ विध्वंसितुं तपो

मे नु शक्रेण प्रेषिता शची ॥ ४६ ॥ रोहिणी वाथ नागी वा मेनका वा तिलोत्तमा ॥ विद्याधरी वा गान्धर्वी यक्षी वा राक्षसी तु वा ॥४७ ॥ लक्ष्मीरियं नु माया वा विष्णोर्मोहितुमागता ॥ शिव उवाच ॥ तां विलोक्य मुमूर्च्छाथ कामबाणविमोहितः ॥ ४८ ॥ विवस्त्रोऽथाभवद्ब्रह्मा ऊचे दूरात्सरस्वती ॥ स्वरस्वत्युवाच ॥ परिधेह्यंशुकं ब्रह्मन्सावधानमना भव ॥४९॥ ॥ शिव उवाच ॥ इत्युक्तः सोऽवदद्ब्रह्मा कुरु मे वाञ्छितं शुभे ॥ इति श्रुत्वाथ वाक्यं सा चिन्तया दुःखिताभवत् ॥ ५० ॥ ॥ सरस्वत्युवाच ॥ पुरा कृतानां पापानां विपाकोऽयमुपागतः ॥ क्व गतं ब्रह्मणो ज्ञानं श्रुतिशास्त्रसमुद्भवम् ॥५१॥ उग्रं तपश्च किंभूतं देवताराधनं तथा ॥ पलायनमितः कुर्यां शापयिष्यति मां ध्रुवम् ॥ ५२ ॥ क्व ज्ञानं क्व विचारो वा क्व लज्जा काममोहिते ॥ ॥ शिव उवाच ॥ एवं सा विह्वलीभूता दीना प्रोवाच तं तदा ॥ ५३ ॥ अहं कन्या तव ब्रह्मन् पिता मे त्वं प्रजापते ॥ एवंविधानि कर्माणि न जातानि क्वचित्प्रभो ॥ ५४ ॥ निबोध स्वात्मरूपं त्वं कुरु चित्तं सुसंवृतम् ॥ ॥ शिव उवाच ॥ एवमुक्तोऽपि स ब्रह्मा मदनार्तिप्रपीडितः ॥५५॥ न वाक्यं बुबुधे तस्या न जहौ तां मतिं तदा ॥ दृष्ट्वा तु तं तथाभूतं ब्रह्माणं सा सरस्वती ॥ ५६ ॥

कम्पती प्रययौ तत्र यत्रेन्द्रः सगणोऽभवत्॥ ब्रह्मापि विह्वलः पश्चाद्ययौ तामनुलक्षयन् ॥५७॥ इन्द्रोऽथ दृष्ट्वा ब्रह्माणं विह्वलं चासनेऽनयत् ॥ नमस्कृत्याब्रुवन्देवा ब्रह्माणं सदसि स्थितम् ॥ ५८ ॥ विनम्रवदनं दीनं दृष्ट्वा तत्रसिरे क्षणात्॥ ॥ देवा ऊचुः॥ अहो किमेतत्संजातं दैत्यैर्नु सकलं हृतम्॥५९॥ ॥शिव उवाच ॥ ब्रह्माथ लज्जितः किंचिन्नोचे देवान्स्वयं तदा॥ देवास्ते विस्मिताः सर्वे परस्परमथाब्रुवन् ॥६०॥ ॥ देवा ऊचुः ॥ इन्द्रियाश्वाः सुदुर्जेया देवैश्चासुरमानुषैः ॥ मनोमृगोऽयं तत्रापि नितरां दुर्जयो मतः ॥ ६१ ॥ यज्जयात्प्राप्यते ब्रह्माऽजयाच्च नरकं तथा॥ विद्वांसमप्ययं ग्राम इन्द्रियाणां जयं नयेत् ॥ ६२ ॥ ब्रह्मणो नापराधोयं कश्चिद्देवोऽब्रवीत्तदा ॥ परमात्मा वदत्येवं मनोहमिन्द्रियेष्विति ॥६३॥ ॥शिव उवाच॥ इत्थं तद्वचनं शृण्वन्बभूव खिन्नमानसः ॥ अथोत्तस्थौ ययौ ब्रह्मा वीर्यं तस्यास्खलत्तदा ॥ ६४ ॥ सरसः पश्चिमे भागे नदीसागरसंगमे॥ स्नातो वीर्यं परित्यज्य स्वधाम सुमना ययौ ॥ ६५ ॥ ॥ इति श्री-स्कन्दपुराणे विनायकमाहात्म्ये चिंतामण्युपाख्याने द्वितीयोऽध्यायः॥ २ ॥ ॥ ॥ ॥

॥ श्रीशिव उवाच ॥ अथ सोऽप्यभिजित्पत्न्या समुद्रं स्नातुमाययौ ॥ पर्वणि श्रद्धया युक्तश्चक्रे स्नानं तया

सह ॥१॥ तृषिता सा गुणवती पपौ चांजलिना जलम् ॥ यद्वीर्यं ब्रह्मणा त्यक्तं दैवात्तदुदरे गतम् ॥२॥ तदैव गर्भसंभूतिर्गुणवत्या बभूवह ॥ पूरयित्वा चतुर्मासान्मुनेर्वाक्यमनुस्मरन् ॥३॥ सपत्नीकः पुरं यातः प्रशंसन्नभिजिन्मुनिम् ॥ अमात्या ब्राह्मणाः सर्वे प्रजा नागरिकाश्च ये ॥४॥ शोभितं नगरं कृत्वा बहिर्याता नराधिपम् ॥ नमस्कृत्याब्रुवन्सर्वे राजानं भृशदुःखिताः ॥५॥ ॥ नागरिका ऊचुः ॥ सनाथा हि वयं जाताः सर्वे त्वय्यागते नृप ॥ ॥ शिव उवाच ॥ गजमारोहयामासुरमात्यास्तं नराधिपम् ॥ ६ ॥ नरयानेथ राज्ञीं तां पुरं ते विविशुर्मुदा ॥ प्रशशास निजं राज्यं राजा धर्मेण धर्मवित् ॥७॥ भार्या गुणवती तस्य नवमासादनन्तरम् ॥ पुत्रं प्रासूत च शुभे दिने रूपेण चाद्भुतम् ॥८॥ ज्योतिर्विद्भिरनुज्ञातो गण इत्यभिधां पिता ॥ कृत्वाभ्युदयिकं श्राद्धं व्यतीते दशमेऽहनि ॥ ९ ॥ दिनेदिनेऽथ ववृधे बालको विकटाननः ॥ जीमूताभः पिङ्गनेत्रो दीर्घवक्षा भृशोन्नतः ॥ १० ॥ नीहारेणावृतो भाति हिमाचल इवापरः ॥ उत्पाट्य तालवृक्षांश्च स रेमे बालकैः सह ॥ ११ ॥ गजानश्वांस्तथा योधान्स्वयं शिक्षयते बली ॥ स्नानं देवार्चनं नित्यं जपं होमं करोत्यसौ ॥ १२ ॥ ज्ञानवान् शीलसंपन्नो राज्यं स्ववशमानयत् ॥ घटिकार्धेन

योयाति योजनानां शतं मुदा ॥१३॥ बालभावेन यश्चन्द्रं ग्रहीतुमुदडीयत ॥ एकदा नगरद्वारि मदो-
न्मत्तो गजः स्थितः ॥ १४ ॥ रुन्धानोऽन्तर्बहिर्मार्गं गणेन ददृशे तदा ॥ मुष्टिघातेन युयुधे गजराजं
गणो बली ॥ १५ ॥ रुधिरेणावसिक्ताङ्गो गजो यातो बहिर्वनम् ॥ आश्चर्यमभवत्तत्र सर्वेषां पुरवासि-
नाम् ॥१६॥ अथ तस्याभवद्बुद्धिस्तपस्तप्तुं सुदारुणम् ॥ पितुराज्ञां गृहीत्वा स निर्जनं वनमाययौ ॥१७॥
आरराध शिवं भक्त्या निराहारो जितेन्द्रियः ॥ जपन्पञ्चाक्षरीं विद्यां वर्षाणामयुतं गणः ॥१८॥ तिष्ठ-
न्नेकेन पादेन दशवर्षाण्यहर्निशम् ॥ वाताशी दशवर्षाणि त्रिंशद्वर्षाणि तोयभुक् ॥ १९॥ शीतोष्णवात-
वर्षाणां सहनो निरहंकृतिः ॥ शिवं प्रपूजयामास धत्तूरैः कमलैः शुभैः ॥ २० ॥ अतिथींस्तर्पयामास
फलमूलजलादिभिः ॥ तपसा ववृधे तस्य तेजः शारीरमद्भुतम् ॥२१॥ गोभिर्व्याघ्रा गजाः सिंहैर्नकुलैश्च
भुजंगमाः ॥ क्रीडन्ति सह निर्वैरास्तेजसा तस्य तद्वने ॥२२॥ मन्दभानुरभूद्भानुर्देवाः सर्वे चकम्पिरे ॥
तेजसा तस्य तप्ताङ्गास्तर्कयामासुरन्वहं ॥२३॥ देवा ऊचुः ॥ किमयं ब्रह्मणः स्थानमैन्द्रं वा वैष्णवं तथा ॥
याचिता तपसा शंभुं प्रसन्नं जगदीश्वरम् ॥२४॥ शिव उवाच ॥ कदाचिदमराः स्कन्द जग्मुः कैलासमुत्तमम् ॥

नमस्कृत्याब्रुवन्देवं शंकरं सर्वगं विभुम् ॥२५॥ देवा ऊचुः ॥ कच्चित्तपति देवेश त्वामुद्दिश्य तपश्चिरम् ॥
तेजसा तस्य तप्ताङ्गा वयं त्वां शरणागताः ॥२६॥ शिव उवाच ॥ देवतानां वचः श्रुत्वा स्कन्दाहं भक्ति-
भावितः ॥ विसृज्य देवताः प्रायां गणो यत्र वनेवसत् ॥२७॥ विभूतिधवलं शान्तमक्षमालाधरं कृशम् ॥
ध्यायन्तं शंकरं चित्ते जपन्तं स्थिरमानसम् ॥२८॥ ददर्शाहं निजं भक्तमवोचं मधुरं वचः ॥ चिरका-
लकृतेनाहं तपसानेन तोषितः ॥ २९ ॥ आकृष्टस्तव भक्त्या च वरं दातुमुपागतः ॥ वरयस्व वरान्वत्स
दास्ये तव हृदि स्थितान् ॥ ३० ॥ इति श्रुत्वा वचो मत्तो नमस्कृत्यावदत्स माम् ॥ गणो बद्धाञ्जलि-
र्भक्त्या धन्योऽहं तव दर्शनात् ॥ ३१ ॥ सफलं चाभवन्मेद्य तपस्तप्तं सुदारुणम् ॥ एवमुक्त्वाथ तुष्टाव
शंकरं वरदं गणः ॥ ३२ ॥ शिव शंभो नमस्तुभ्यं सर्वेषां शुभदायक ॥ नमस्ते जगतां नाथ विश्वकर्त्रे
नमोस्तु ते ॥ ३३ ॥ रजोयुक्तस्वरूपाय पालकाय नमोनमः ॥ सत्वात्मने च संहर्त्रे तामसाय नमोनमः
॥ ३४ ॥ कर्मणां फलदात्रे च भुक्तिमुक्तिप्रदायक ॥ मनोवागनिरूप्याय ब्रह्मभूताय ते नमः ॥ ३५ ॥
अन्तर्वायुं निरुन्धाना योगिनो ध्यानशालिनः ॥ निरीहा यमवेक्षन्ते तं नमामि सदाशिवम् ॥ ३६ ॥ शिव

उवाच ॥ स्तुत्वैवं वरयामास प्रसन्नं शकरं गणः॥ गण उवाच ॥ तुष्टश्चेच्छिव मह्यं त्वं भक्तिं देहि दृढां तव
॥३७॥ शिव उवाच॥ इत्युक्तस्तमुवाचाथ प्रसन्नोऽहं पुनर्गण॥ मदीया भक्तिरचला भविष्यति तवानघ॥३८॥
दास्येऽहं परमप्रीतो वरानन्यांश्च ताञ्छृणु ॥ त्रैलोक्याकर्षणे शक्तो मत्प्रसादाद्भविष्यसि ॥ ३९ ॥ ब्रह्मा-
दीनां च देवानामवध्यश्च सदा भव ॥ शूराणां त्वं समर्थानामजेयश्च रणाजिरे ॥ ४० ॥ इति दत्त्वा
वरांश्चाहं जगामान्तर्हितो दिवम् ॥ गणोपि स प्रसन्नात्मा निजं गृहमथाययौ ॥४१॥ चिरकालोत्सुका-
भ्यां स पितृभ्यां ददृशे तदा ॥ नमस्कृत्याथ पितरावालिलिङ्ग गणो मुदा ॥ ४२ ॥ शशंस ताभ्यां
सकलं यद्यद्वृत्तं वने शुभे ॥ अजिघ्रन्मस्तके राजा निजं पुत्रं चिरागतम् ॥ ४३ ॥ पिता माताथ पुत्रश्च
हर्षयुक्तास्तदाभवन् ॥ आनन्दाश्रूणि ते तत्र परस्परमथोत्सृजन् ॥ ४४ ॥ कदाचिदभिजिद्राजा पुत्रं
दृष्ट्वा गुणाद्भुतम् ॥ उपहूयाङ्क आदाय हितं वचनमब्रवीत् ॥ ४५ ॥ अभिजिदुवाच ॥ तपसा यशसा
बुध्द्या बलेनाक्रमशालिना ॥ मत्तोधिकोसि पुत्र त्वमतो राज्यं ददामि ते ॥ ४६ ॥ शिव उवाच ॥
इत्युक्त्वा स गणं पुत्रं हर्षयुक्तेन चेतसा ॥ अमात्यान्मन्त्रयामास पुत्रराज्याय सादरम् ॥ ४७ ॥ संभा-

रानकरोद्राजा प्रधानैरनुमोदितः ॥ अभिषेकं चकाराशु शुभे लग्ने शुभे दिने ॥ ४८ ॥ अथ पत्न्या समं
राजा निवृत्तिपर आस सः ॥ कुर्वन्गणोपि राज्यं स गणयामास नेतरान् ॥ ४९ ॥ राजानः केचिदस्यैव
कुर्वते स्म निषेवणम् ॥ जयाय यततेस्माथ गणो राज्ञां बलीयसाम् ॥ ५० ॥ गृहीत्वाथ निजां सेनां
हस्त्यश्वरथसंयुताम् ॥ प्रमथो गुणवांश्चैव ग्रन्थश्च विश्वजित्तथा ॥ ५१ ॥ प्रधानास्तस्य चत्वारो राज-
चित्तानुयायिनः॥ स्वसैन्येन च संयुक्ता ययुर्वेगाद्रणं मुदा ॥५२॥ अन्यानाज्ञापयामासुः सेनासंवरणे च ते ॥
तनुत्राणानि कंकोलान्खड्गखेटकतोमरान् ॥५३॥ आज्ञया नृपतेराशु दधुर्वीराः सुसंवृताः ॥ धनुर्बाणांस्तथा
चान्ये भिन्दिपालांस्तथापरे ॥ ५४ ॥ इभान्संवाहयामासुरयस्त्राणैर्हयानपि ॥ संवृतां वाहिनीं कृत्वा
प्रतस्थे सबलो गणः ॥ ५५ ॥ शतयोजनविस्तीर्णा वाहिनी प्रययौ पुरः ॥ तिर्यक् पश्चात्तथाभूता छाद-
यन्ती महीतलम् ॥५६॥ नर्तयन्ति हयान्वीरा ननृतुश्च स्वयं परे ॥ करिस्यन्दनपत्तीनां वीराणां वाजिनां
तथा ॥५७॥ वाद्यानां बहुशः शब्दैः सशब्दाः ककुभो दश ॥ शूलपाणिश्च सुलभो राजपुत्रौ विरेजतुः
॥ ५८ ॥ सेनामध्यचरौ वीरौ गणपार्श्वे सुसंवृतौ ॥ गणोऽपि शुशुभे तत्र शशीवोडुभिरावृतः ॥५९॥

यं यं सेनापतिं वीरं शृणोति स्म गणो बली ॥ तत्र तत्राथ गत्वा तं जयति स्म रणाजिरे ॥ ६० ॥
शरण्यान्पालयामास राज्ञोऽथ निरहंकृतीन् ॥ एवं तेन जिताः सर्वे राजानः पृथिवीतले ॥ ६१ ॥
पुत्रयोश्च प्रधानानां तस्यापि भुजयोः शमम् ॥ न ययौ रणकण्डूतिर्युद्धे कुत्रापि भूभुजाम् ॥ ६२ ॥
इति श्रीस्कन्दपुराणे चिन्तामण्युपाख्याने तृतीयोऽध्यायः ॥ ३ ॥ ॥ ॥ ॥ ॥
॥ ॐ शिव उवाच ॥ एवं जित्वा स भूर्लोकं स्वर्गं जेतुमुपाक्रमत् ॥ अमात्यैः सह संमन्त्र्य देवाञ्जे-
तुमथाययौ ॥ १ ॥ असीन्बाणान्धनुश्चैव गृहीत्वा प्राप खं गणः ॥ नन्दने ददृशे तेन हयराजः शुभस्त-
दा ॥ २ ॥ तमारुरोह स बलाद्गृहीत्वा मातलेर्गणः ॥ शशंस मातलिर्गत्वा दैत्यकर्म शचीपतिम् ॥ ३ ॥
श्रुत्वाथ मातलेर्वाक्यं कोपेन प्रज्वलन्निव ॥ इन्द्रस्तं गजमारुह्य ययौ देवगणैः सह ॥ ४ ॥ उच्चैःश्रवः-
समारूढमसिबाणधनुर्धरम् ॥ भीमकायं दृढं क्रूरं पिङ्गाक्षं तेजसान्वितम् ॥५॥ गणं दृष्ट्वा हृदा मेने दुर्जयं
स शचीपतिः ॥ उवाच सामवाक्यं तमश्वोऽयं दीयतामिति ॥ ६ ॥ इति श्रुत्वा गणः प्राह गजोऽयं
दीयतां मम ॥ श्रुत्वैवं सहसा देवा निजघ्नुः सर्व एव तम् ॥७॥ क्रोधात्सोऽपि महावीरो निजघान शरैः

सुरान् ॥ शरघातभयत्रस्ता देवा याता दिशो दश ॥ ८ ॥ तमुवाच ततः पश्चादिन्द्रमैरावतं स्थितम् ॥
गण उवाच ॥ कुरु युद्धं वज्रहस्त यदि शक्तिः शचीपते ॥ ९ ॥ अमुमश्वं गृहाणाशु त्यजस्वैरावतं
गजम् ॥ शिव उवाच ॥ अवारुरोह मघवा नीतिशास्त्रमनुस्मरन् ॥ १० ॥ युयुधे तेन दैत्येन वज्रपाणि-
र्महाबलः ॥ इन्द्रेण निहतः सोऽथ वज्रेण निपपात ह ॥११॥ जगाम मूर्छां महतीं सावधानस्ततो गणः
॥ असिना पुरुहूतस्य हस्ताद्वज्रमपातयत् ॥ १२ ॥ स्थापयित्वा स्वशस्त्राणि बाहुयुद्धमथाकरोत् ॥
वृत्रहा न्यपतत्तस्य मुष्टिघातेन तत्क्षणात् ॥१३॥ तं जगाद गणः पश्चाद्दत्तमिन्द्रपदं तव ॥ अहं भोक्ष्ये
निजं राज्यं नानाभोगयुतं भुवि ॥ १४ ॥ ब्रह्मा विष्णुश्च रुद्रश्च तदा सर्वे चकम्पिरे ॥ सेन्द्रान्देवान्वि-
जित्वैवं गणो यातो निजं पुरम् ॥ १५ ॥ पितरौ तस्य तौ दृष्ट्वा गणं पुत्रं समागतम् ॥ गृहीतत्यक्त-
शक्रं तं जितारातिं जितामरम् ॥ १६ ॥ आलिङ्ग्य बालकं हर्षमापतुः स जहर्ष च ॥ प्रणम्य पितरौ
वृत्तं ताभ्यामकथयत्तदा ॥ १७ ॥ पालयामास धर्मेण सप्तद्वीपवतीं महीम् ॥ कदाचित्स गणः प्रायान्मृ-
गयायै महद्वनम् ॥ १८ ॥ नीलोष्णीषो नीलपटः सुनीलातपवारणः ॥ नीलोत्तंसो नीलहयो भृशं

नीलोत्तरीयकः ॥ १९ ॥ नीलबाणधरो नीलखेटको नीलचापवान् ॥ असिं शक्तिं च बिभ्राणो गोधा-
चर्मावृताङ्गुलिः ॥ २० ॥ सेवकैश्च तथाभूतैर्बभ्रामानुगतो वनम् ॥ भ्रमता ददृशे तेन मृगसङ्घो
वनान्तरे ॥ २१ ॥ वेष्टयित्वा मृगगणं निजघ्नुः सर्व एव ते ॥ निहत्य मृगसङ्घं तं निन्युस्तत्सेवकाः पुरम्
॥ २२ ॥ मृगयित्वा मृगान्राजा मृगयामास पद्धतिम् ॥ मार्गमन्विष्यता राज्ञा दृष्ट आश्रम उत्तमः
॥ २३ ॥ राज्ञा सहैव संसस्रुर्वीरा बहुतरा वने ॥ श्रमेण पीडिताः सर्वे तमाश्रममथाविशन् ॥ २४ ॥
सस्नुर्बिसानि जक्षुस्ते कन्दमूलफलानि च ॥ शिष्येण केनचिद्दृष्ट्वा मुनये ते निवेदिताः ॥ २५ ॥
मुनिराज्ञापयच्छिष्यं श्रेष्ठस्यानयने तदा ॥ कपिल उवाच ॥ तेषु श्रेष्ठतमं विप्रानयस्व मत्समीपतः ॥२६॥
शिव उवाच ॥ तत्र गत्वावदच्छिष्योऽभवच्छ्रेष्ठतमं मुनिः ॥ आह्वयति महाभाग शीघ्रं यातु मया सह
॥ २७ ॥ श्रुत्वैवं सहसा राजा गणः शिष्यमथाब्रवीत् ॥ याम्यहं नय मां विप्र दर्शनाय मुनेस्तव ॥२८॥
आकर्ण्येत्थं वचस्तस्य आनयत्स मुनेः पुरः ॥ आचचक्षे मुनिं विप्र आनीतोयं तदग्रणीः ॥ २९ ॥
गणो दृष्ट्वा मुनिश्रेष्ठं कपिलं तेजसांनिधिम् ॥ वक्षस्थले निदधतं कोटिसूर्यसमं मणिम् ॥ ३० ॥ मुदा

परमया राजा प्रणनाम महामुनिम् ॥ आशीर्भिरनुगृह्याथ कपिलस्तं वचोऽब्रवीत् ॥ ३१ ॥ कोऽसि त्वं च कुतो यातो नाम ते किं वदस्व मे॥ मुनेर्वाक्यमथाकर्ण्य कपिलं तं गणोब्रवीत् ॥३२॥ गण उवाच॥ गणदैत्य इति ख्यातं नाम मे विश्रुतं भवेत् ॥ मृगयायै वनं यातोऽपराह्णे श्रान्तवाहनः ॥ ३३ ॥ भ्रमता ददृशे तेऽद्य आश्रमोऽद्भुतदर्शनः ॥ स्नात्वाशित्वा फलं मूलं दर्शनार्थं तवागतः ॥ ३४ ॥ त्वद्दर्शनेन पूतोऽहं देह्याज्ञां यामि मत्पुरम् ॥ शिव उवाच ॥ इति तद्वचनं श्रुत्वा कपिलस्तमथाब्रवीत् ॥३५॥ मुनिरुवाच ॥ क्षुत्पिपासार्दिता मेऽस्मिन्नाश्रमे नैव जन्तवः ॥ अतो भुंक्ष्व ततो याहि सुखेन स्वपुरं गण ॥ ३६ ॥ शिव उवाच ॥ गणः प्रोचे ततः पश्चात्सेना मे सरसि स्थिता ॥ विना तां नैव भोक्ष्येऽहं ससेनो याम्यतः पुरम् ॥ ३७ ॥ वदतीत्थं गणे दैत्ये तं पुनर्मुनिरब्रवीत् ॥ आनयिष्येऽत्र सेनां ते स्थिरचित्तः क्षणं भव ॥ ३८ ॥ वाहिनीमानयच्छिष्यो मुनिसंकेतनोदितः ॥ आगतायां ततश्चिन्त्वामुत्ततार गलान्मुनिः ॥ ३९ ॥ चिन्तामणिमार्णिं पूज्य प्रार्थयामास भोजनम् ॥ षड्रसैर्विविधान्नैश्च स्वादुद्र-

---

१ मन्नाम ते श्रुतं भवेत् । पाठः.

व्यैरनेकधा ॥ ४० ॥ मधुदुग्धदधिघृतैः पक्वान्नैः पायसैरपि ॥ परिपूर्णानि सर्वत्र पात्राणि सैनिकैस्तदा ॥ ४१ ॥ दृष्टानि प्रतिपुरुषमेकैकं समपद्यत ॥ आज्ञया कपिलस्याथ सर्वेऽभ्यवहरंस्तदा ॥ ४२ ॥ गणसेनाचराः सर्वे संतृप्तास्ते तदाभवन् ॥ भोजनानन्तरं राजा सुखासीनोऽवदन्मुनिम् ॥ ४३ ॥ गण उवाच ॥ मुनीनां जपशीलानां फलमूलजलाशिनाम् ॥ मनसा सृष्टिसंहारशापानुग्रहकारिणाम् ॥ ४४ ॥ एतादृशेन मणिना नेक्ष्यतेऽर्थो महामुने ॥ तद्देहि मणिमेनं मे ततो यास्ये निजं गृहम् ॥ ४५ ॥ श्रीशंकर उवाच ॥ गणदैत्यमुखादित्थं श्रुत्वा प्रोवाच तं मुनिः ॥ प्राणभूतं मणिं नाहं दास्येऽन्यद्वक्तुमर्हसि ॥ ४६ ॥ श्रुत्वैवं जगृहे तेन मुनिहस्ताद्बलान्मणिः ॥ ततः प्रोचे मुनिः कोपात्कृतघ्नं तं गणं खलम् ॥ ४७ ॥ ऋषिरुवाच ॥ त्रयो लोकास्त्वयाक्रान्ता दैत्य दर्पेण मामपि ॥ आचिक्षेप ततस्तेऽन्तमवतारः करिष्यति ॥ ४८ ॥ कोपि भावी बलाद्यस्मान्मणिर्मेऽङ्गीकृतस्त्वया ॥ इतो गच्छ महादुष्ट नोचेद्भस्मीभविष्यसि ॥ ४९ ॥ शिव उवाच ॥ श्रुत्वा वेपथुमापासौ कोपोक्तं कापिलं वचः ॥ प्रचचाल गणस्तस्मादाश्रमात्कपिलस्य च ॥ ५० ॥ पुरं विवेश सबलः शापशल्यं समुद्वहन् ॥ दृष्ट्वा तौ पितरौ

शान्तौ प्रणनाम गणो मुदा ॥५१॥ वने यच्चरितं जातं तन्निवेद्य तयोः स्वयम् ॥ प्रशशास निजां पृथ्वीममात्यैः सह दैत्यराट् ॥ ५२ ॥ अनेकान्बुभुजे भोगांश्चिन्तामणिसमुद्भवान् ॥ लोकानां दर्शयामास कौतुकानि बहून्यपि ॥ ५३ ॥ विषमुत्तारयत्तेन मणिना सर्पसंभवम् ॥ एवं तेनाभवत्ख्यातो गणोऽसौ जगतीतले ॥५४॥ इति श्रीस्कन्दपुराणे चिन्तामण्युपाख्याने मणिहरणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥

॥ स्कन्द उवाच ॥ गणेन गर्वतो भद्र हृते चिन्तामणौ मणौ ॥ अकरोत्कपिलः क्रुद्धः किमेतद्वद शंकर ॥ १ ॥ साम्ब उवाच ॥ कार्तिकेय प्रवक्ष्यामि शृणु तस्य कथानकम् ॥ हृत्वा मणिं गणे याते यत्कृतं तेन तद्वदे ॥ २ ॥ चिन्तामणिवियोगेन दुःखितः कपिलो मुनिः ॥ शुशोचोपगतो मूर्छां श्वासोच्छ्वासं जहौ भृशम् ॥ ३ ॥ अथ शिष्यैः समागम्य सावधानः कृतो मुनिः ॥ मरणं चिन्तयामास गणदैत्यस्य सादरम् ॥४॥ निदध्यौ सुचिरं कालं कपिलो मुनिपुङ्गवः ॥ त्रैलोक्यपीडकस्यास्य कस्मान्मृत्युर्भविष्यति ॥ ५ ॥ तस्मिन्ध्यायति विष्णोर्या योगमाया तमागता ॥ प्रससादाथ तद्धाम प्रच्छाद्य रविमण्डलम् ॥६॥ अध ऊर्ध्वं पुरः पश्चात्तिर्यक्कोणेषु सर्वतः ॥ पातालं ब्रह्मलोकं च पर्वतान्सप्तसागरान् ॥ ७ ॥ व्याप-

यन्ती स्थिता तस्य पुरस्ताच्चारुहासिनी ॥ नानालंकारयुक्ता स्त्री सुरूपा चारुलोचना ॥८॥ दृष्ट्वा ताम-
द्भुतां मायां व्यापयन्तीं दिशो दश ॥ किं दृष्टं चिन्तितं मे किमित्याह मुनिरात्मनि ॥ ९ ॥ आदिश-
क्तिरवोचत्तं बुद्ध्वा तन्मनसि स्थितम् ॥ ॥ शक्तिरुवाच ॥ मुने शृणु गणो दैत्यस्तपस्तेपे भृशं पुरा॥१०॥
लब्ध्वा शैवान्वरान्पश्चात्त्रैलोक्ये पीडकोऽभवत् ॥ विना विनायकं विप्र सोऽवध्यः सर्वदैवतैः ॥ ११ ॥
योऽजनीदं जगत्सर्वं पाति संहर्ति यः पुमान् ॥ हन्यादेनं स चेद्विप्रावतारं बिभृयात्परम् ॥१२॥ मुनि-
रुवाच ॥ त्रिकालज्ञे जगन्मातः संशयं छिन्धि मेऽधुना ॥ त्वां दृष्ट्वा सुप्रसन्नं मे मनो जातं जगन्मये
॥ १३ ॥ अवतारं देवि कथं बिभृयात्स विनायकः ॥ शिव उवाच ॥ इति श्रुत्वा वचस्तस्य कपिलस्य
महात्मनः ॥ १४ ॥ प्रत्युवाचाथ शक्तिः सा पृच्छन्तं कपिलं मुनिम् ॥ शक्तिरुवाच ॥ स उपासनया
विप्र गृहे तेऽवतरिष्यति ॥ १५ ॥ शिव उवाच ॥ इति श्रुत्वा वचस्तस्यास्तां प्रणम्याब्रवीन्मुनिः ॥ मुनि-
रुवाच ॥ वद मे कृपया देवि शीघ्रं त्वं तामुपासनाम् ॥ १६ ॥ करिष्ये भवतीवाक्यादहं भक्त्यादरेण
ताम् ॥ शिव उवाच ॥ ततः साकथयन्मन्त्रं कपिलाय महर्षये ॥ १७॥ शक्तिरुवाच ॥ मया ते कथितं

नाम स मन्त्रः सिद्धिदायकः ॥ जपस्व तं मुनिश्रेष्ठ ॐकारपल्लवान्वितम् ॥१८॥ नमोन्तं स्थिरचित्तोऽष्टादशलक्षं विधानतः॥ तद्दशांशेन जुहुयात्तर्पयस्व दशांशतः ॥ १९ ॥ अहोरात्रेण चैकेन कुरुष्वैवं समाहितः ॥ कुण्डान्तराविर्भविता चतुर्बाहुर्विनायकः ॥२०॥ दिव्याम्बरधरो दिव्यभूषणः सिंहवाहनः ॥ सिद्धिबुद्धियुतो बिभ्रत्परशुं मोदकानपि॥२१॥ कमलं पुष्पमालां च स तेऽभीष्टं विधास्यति ॥ हनिष्यति गणं दैत्यमानयिष्यति तं मणिम्॥२२॥ ॥शिव उवाच॥ इत्युक्त्वान्तर्हिता माया तदुक्तिं स व्यधान्मुनिः॥ जपं होमं दशांशेन तर्पणं द्विजभोजनम् ॥ २३ ॥ अहोरात्रेण स मुनिरेकेन समपादयत् ॥ कुण्डान्तर्ददृशे मूर्तिरद्भुता चारुलोचना ॥ २४ ॥ बिभ्रती मोदकान्हस्ते परशुं कमलं तथा ॥ नानासुमनसां मालां सिद्धिबुद्धिविराजिताम् ॥ २५॥ दिव्यभूषणसंयुक्तां मृगेन्द्रवाहनां शुभाम् ॥ वैनायकीमपश्यत्तां मूर्तिं तेजोमयीं यदा ॥ २६ ॥ प्रत्येतिस्म तदा मायावाक्यं स कपिलो मुनिः ॥ दृष्ट्वा तां प्रणनामादौ श्रुत्वा वाक्यं जगाद सः ॥ २७ ॥ ॥ मुनिरुवाच ॥ इयं धन्याद्य धरणी संपदो मे फलान्विताः ॥ दिव्यं धाम भजेयुर्मे पूर्वजाः पुण्यशालिनः ॥ २८ ॥ नाथ मेऽद्य कुलं धन्यं जन्म शास्त्रं श्रुतं तपः ॥

यन्मया परमं ब्रह्म चित्स्वरूपं गुणातिगम् ॥ २९ ॥ बीजभूतं त्रिलोकानामबीजं ददृशे पुरः ॥ अनुग्रा-
ह्योऽस्मि देवेश प्रसादं कुरु मेऽधुना॥३०॥ चित्तवृत्तिं मदीयां स्वे पदाब्जे निश्चलां कुरु॥ ॥ शंकर उवाच ॥
इति श्रुत्वा मुनिमुखात्तं जगाद विनायकः ॥ ३१ ॥ ॥ विनायक उवाच ॥ अनेकजन्मनां विप्र फलमे-
केन जन्मना ॥ मया दत्तं तव गृहेऽवतारं कुर्वता मुने ॥ ३२ ॥ अवतारे कारणं मेऽन्यदास्ते शृणु
सांप्रतम् ॥ स्वाहास्वधावषट्कारहीना लोकास्त्रयः कृताः ॥ ३३ ॥ बलेन वरगर्वेण गणदैत्येन दुर्मदात्॥
ब्राह्मणाश्चैव देवाश्च पीडिताःसाधवो जनाः॥३४॥ तस्य दुष्टस्य नाशार्थमवतीर्णोऽस्मि भूतले ॥ आदाय
मणिमस्मात्तं नाशयिष्ये क्षणान्मुने ॥३५॥ शिव उवाच ॥ इति ते कथितं स्कन्द यत्कृतं कपिलेन ह ॥
सर्वाघौघहरं सर्वकामदं तत्कथानकम्॥ ३६ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये चिन्तामण्यवतार-
वर्णनं नाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ स्कन्द उवाच ॥ कथं नाशितवान् शंभो गणदैत्यं विनायकः ॥ तत्सर्वं कृपया देव कथयस्व ममा-
ग्रतः ॥ १ ॥ शिव उवाच ॥ यथा नाशितवान्दैत्यं गणं दुष्टमतिं विभुः ॥ तत्तेऽहं कथयिष्यामि तच्छृ-

णुष्व षडानन ॥२॥ कदाचिद्गणदैत्येन दृष्टः स्वप्नो भयंकरः॥ सर्वेषां भयदः स्वस्य नाशस्यापि च सूचकः ॥ ३ ॥ जागृतश्चिन्तयामास सर्वानाकारयन्निशि ॥ अमात्यान्सर्ववीरांश्च द्वौ पुत्रौ पितरं तथा ॥ ४॥ आगतास्ते त्वराभाजो गणस्य मन्दिरं निशि ॥ उपविष्टास्तदा सर्वे निबिडं तत्र संसदि ॥ ५ ॥ ददृशे स गणः सर्वैर्दुःखितश्चिन्तयान्वितः॥ मौनमासंस्तदा सर्वे मौनीभूते गणे स्थिते ॥६॥ अथोचे गुणवानुच्चैः सर्वेषां शृण्वतां गणम् ॥ ॥गुणवानुवाच ॥ कथं ते वदनं म्लानं कुतश्चिन्ता समागता ॥ ७ ॥ अभिजित्प्रमुखाः सर्वे किमर्थं निशि मेलिताः ॥ मौनं चालम्बितं कस्माद्वदस्व कृपया प्रभो ॥ ८ ॥ ॥ शिव उवाच ॥ वदतीत्थं गुणवति नोचे किंचिद्गणो यदा ॥ तदा पप्रच्छतुर्दैत्यं विश्वजित्प्रमथावपि ॥ ९ ॥ आकर्ण्यापि तयोर्वाक्यं नोचे किंचिद्गणो वचः ॥ अथोवाच निजं पुत्रमभिजिन्निकटे स्थितः॥ १० ॥ ॥ अभिजिदुवाच ॥ त्रैलोक्यजयिनस्ते का चिन्ता दुःखं च ते कुतः॥ त्यज मौनं महाबाहो वदस्वारिनिषूदन ॥११॥ ॥ शिव उवाच॥ इति श्रुत्वा पितुर्वाक्यं गणो दीनमुखोऽवदत् ॥ ॥गण उवाच॥ स्वप्नो दृष्टो दुष्टतमो मया यस्तात तं शृणु ॥ १२ ॥ सेनया वेष्टितः कश्चिच्चतुर्बाहुर्भयानकः ॥ परशुं कमलं बिभ्र-

त्कपिलेन सहागतः ॥ १३ ॥ बभक्ष मम सेनां स कपिलेन प्रणोदितः ॥ तत्याज परशुं तेन शिरश्छिन्नं ममापतत् ॥ १४ ॥ इति स्वप्नं कथयितुं सर्वानाहूतवान्निशि ॥ ॥ शिव उवाच ॥ गणभाषितमाकर्ण्य बभाषे प्रमथो गणम् ॥ १५ ॥ ॥ प्रमथ उवाच ॥ देवदैत्यमनुष्याणां पातालतलवासिनाम् ॥ विजेतासि भयं कस्मान्न जानेऽहं भविष्यति ॥ १६ ॥ ॥ शिव उवाच ॥ प्रमथोक्तं वचः श्रुत्वा ग्रन्थः प्राहाथ संसदि ॥ अणुमात्रं कृतमपि कर्म काले शुभाशुभम् ॥ १७ ॥ फलं ददाति बहुलं स्वस्यैव जन्मजन्मनि ॥ ऋषीणामनृतं वाक्यं नेक्ष्यते जगतीतले ॥ १८ ॥ न श्रूयते मया लोकैः स्मर्यते न कदाचन ॥ अतोऽनेन मणिः कस्मादानीतः कपिलान्मुनेः ॥१९॥ भविता तस्य वाक्यस्य परिपाको न संशयः ॥ ॥ शिव उवाच ॥ अथोचे विश्वजित्कोपाद्ग्रन्थं तत्रैव संसदि ॥ २० ॥ ॥ विश्वजिदुवाच ॥ यः प्रसङ्गं न जानाति कार्याकार्यं न वेत्ति यः ॥ स्वामिकार्यं च नो वेत्ति स्वापकर्षं तथैव च ॥ २१ ॥ यः स्पृशेत्परमर्माणि पिशुनो यः पदे पदे ॥ यो वक्त्यपौरुषं वाक्यं व्यर्थजन्मा स ईर्यते ॥ २२ ॥ तन्मावदतु कोऽप्यत्र शृणु राजन्हितं वदे ॥ सबलोऽसि समर्थोऽसि निःसपत्नो जितामरः ॥ २३ ॥

राजंस्ते स्याद्यतश्चिन्ता तस्य नाशं विचिन्त्यताम् ॥ चिन्तां मौनं तथा दुःखं मा कार्षी राजसत्तम ॥ २४ ॥ ॥ शिव उवाच ॥ विश्वजिद्भाषितस्यान्ते दिदेश स गणोऽखिलान् ॥ इदानीमेव तस्यर्षेर्विनाशाय प्रयाम्यहम् ॥ २५ ॥ इति पुत्रवचः श्रुत्वा अभिजित्प्राह तं क्रुधा ॥ ॥ अभिजिदुवाच ॥ द्विजानां चैव देवानामवज्ञाता क्षयं व्रजेत् ॥ २६ ॥ स्वप्नस्तु सर्वथा पुत्र नासत्यो नात्र संशयः ॥ सूचयत्यशुभं दुष्टः शुभः स्याच्छुभसूचकः ॥२७॥ अतस्त्वं सहसा तात मा गच्छ कपिलाश्रमम् ॥ दत्त्वा सेनां महावीरममात्यं वापि कंचन ॥ २८ ॥ गण संप्रेषयाशु त्वं ततो याहि स्वसेनया ॥ ॥ शिव उवाच ॥ इति तातवचः श्रुत्वा बभाषे गणदैत्यराट् ॥ २९ ॥ ॥ गण उवाच ॥ आज्ञया राजधर्मेऽस्मिन्भवतोऽहं मनो दधे ॥ अतो यत्ते हृदि भवेत्तत्कुर्वे साध्वसाधु वा ॥ ३० ॥ शिव उवाच ॥ इयुक्त्वा प्रययौ स्कन्द गणः स कपिलाश्रमम् ॥ एकादशाक्षौहिणीं तां सेनामादाय सत्वरः ॥ ३१ ॥ कपिलं तु मुनिश्रेष्ठं निहन्तुं कृतनिश्चयः ॥ ब्राह्मे मुहूर्ते संप्राप्तः कपिलस्याश्रमं गणः ॥ ३२ ॥ अदर्शि शिष्यसंघैः सोऽश्रावि कोलाहलोऽपि च ॥ वेगाद्गत्वाथ मुनये शंसुः शिष्या गणं चमूम् ॥ ३३ ॥ ॥ शिष्या ऊचुः ॥ आगतोऽस्ति

गणो दैत्यो यः पूर्वं हृतवान्मणिम् ॥ आदाय विपुलां सेनामाश्रमं क्रूरयोधिनीम् ॥ ३४ ॥ विचारय
किमर्थं स आयातः पुनराश्रमम् ॥ दुष्टानां संगमः स्वामिन् सुखार्थो नैव जायते ॥ ३५ ॥ बुद्धिहीना
वयं किं ते वदामो युक्तिसंचयम् ॥ वृत्तान्तः कथितोऽस्माभी रुचिरं तद्विधीयताम् ॥३६॥ शिव उवाच॥
इत्थं वदति शिष्यौघे गणो दूराद्ददर्श तम् ॥ वेदिकामध्यमासीनं कपिलं देवमेवच ॥ ३७ ॥ चतुर्बाहुं
भीमकायं यथा स्वप्ने विलोकितम् ॥ सिंहयानं च दधतं परशुं कमलं शुभम् ॥ ३८ ॥ अदन्तं मोदका-
न्पुष्पमालया चारु शोभितम् ॥ तथैव कपिलं श्रेष्ठमर्चयन्तं विभुं मुदा ॥ ३९ ॥ कपिलोऽपि गणं
दृष्ट्वा चकम्प सेनया सह ॥ समाप्य पूजनं तस्मै प्रार्थयामास सत्वरम् ॥ ४० ॥ ॥ कपिल उवाच ॥
अस्माद्दुष्टतमाद्देव मणिहर्तुः पुरैव नः ॥ त्रैलोक्यपीडकाद्देवब्राह्मणद्रोहिणोऽपि च ॥ ४१ ॥ शरण्यात्रक्ष
देवेश गणदैत्याद्विनायक ॥ परिहर्तुं भुवो भारमवतीर्णोऽसि लीलया ॥ ४२ ॥ ॥ श्रीशिव उवाच ॥
मुनीरितं वचः श्रुत्वा तस्थौ कोपाद्विनायकः ॥ संहरन्निव त्रीँल्लोकान्युद्धायोद्यतमानसः ॥ ४३ ॥ सिद्धि-
बुद्धियुतः सिंहमारुरोह विनायकः ॥ एतस्मिन्समये सिद्धिः प्रणनामावदच्च तम् ॥४४॥ ॥ सिद्धिरुवाच॥

योधयिष्यामि सगणं गणदैत्यं तवाज्ञया ॥ विजयः प्राप्स्यते स्वामिंस्त्वत्प्रसादाद्रणाङ्गणे ॥ ४५ ॥ शिव उवाच ॥ सिध्युक्तां गिरमाकर्ण्य संतुतोष विनायकः ॥ नानाशक्तिमतीं सिद्धिं युद्धायाज्ञां ददौ विभुः ॥ ४६ ॥ तदाज्ञया ययौ सिद्धिर्गणसेनाजिघत्सया ॥ दृष्ट्वा तां क्रूरवदनां गणो योद्धुमुपाक्रमत् ॥४७॥ तमूचतू राजपुत्रावावां यावो रणं पुरः ॥ हनिष्यावो रिपूंश्चैनां कास्यास्मान्गणना भवेत् ॥४८॥ तयोरित्थं गिरं ज्ञात्वा सेनां दृष्ट्वा रणोत्सुकाम् ॥ स्वयं सा कल्पयामास सिद्धिर्नानाविधां चमूम् ॥ ४९ ॥ चतुःपादान्दशभुजान्दन्तुरान्सप्तनेत्रकान् ॥ त्रिपदं पञ्चहस्तं च षण्मुखं च चतुर्मुखम् ॥ ५० ॥ पंचास्यं च त्रिनेत्रं च द्वादशास्यं महाभुजम् ॥ मुद्गरान्खड्गपाशासिमुसलानि च पट्टिशान् ॥ ५१ ॥ भिंडिपालधनुर्बाणांस्तालवृक्षाननेकशः ॥ बिभ्रतः कुर्वतो घोरान्सशब्दान्ससृजे भटान् ॥ ५२ ॥ अथोवाच गणः पुत्रौ वीरांश्चान्वेक्ष्य तान्भटान् ॥ ॥ गण उवाच ॥ सर्वेषामद्य वीराणां द्रष्टास्मि बलपौरुषे ॥५३॥ तत्र तत्र रणे कण्डूर्येषां नैव शमं गता ॥ ॥ शिव उवाच ॥ गणवाक्यमिति श्रुत्वा युगपत्सर्व एव ते ॥५४॥ जानुभागान्करैर्हत्वा जघ्नुर्वीरान्सपत्नकान् ॥ सिद्धीरिताश्च ते सर्वे न्यहनन्गणसैनिकान् ॥५५॥

केचिच्चक्रुर्द्वन्द्वयुद्धं केचिज्जघ्नुः परस्परम् ॥ गुणवान्पञ्चहस्तेन चतुःपादेन विश्वजित् ॥ ५६ ॥ त्रिनेत्रेण
समं ग्रन्थः प्रमथः षट्पदेन च ॥ युयुधे शूलपाणिश्च द्वादशास्येन संयुगे ॥ ५७ ॥ सिद्धिश्च सुलभ-
श्चान्ये सिद्धिवीराः सहस्रशः ॥ अयुध्यन्संगरे तत्र शस्त्रास्त्रै रिपुसंचयैः ॥ ५८ ॥ परस्परमवापुस्ते जय-
भङ्गमनेकशः ॥ शूराः पदातयो वाहाःस्यन्दनोष्ट्रेभसंश्रयाः ॥ ५९ ॥ खण्डशो निहताः पेतुस्ततस्ते रण-
मण्डलम् ॥ गजाश्ववीरपत्तीनामुष्ट्राणां शोणितौघजाः ॥ ६० ॥ वहन्ति स्म महानद्यः प्राच्योदीच्या
रणस्थलात् ॥ सिद्धिसंघे कदाचिच्च भङ्गं याते रणे यदा ॥ ६१ ॥ तदैवाचिन्तयत्सिद्धिर्लक्षं पुत्रं
जयाय सा॥ एको लक्षेण यो युद्ध्येल्लक्षचापासिखेटभृत् ॥६२॥ आगत्यैवाहनत्सोऽथ गणसेनामितस्ततः॥
गणपुत्रौ समायातौ कर्तुं लक्षेण संगरम् ॥ ६३ ॥ जीमूताविव तौ वर्षाकाले बाणान्ववर्षतुः ॥ अन्त-
रिक्षं तथा स्वर्गो बाणैर्व्याप्ता दिशो दश ॥ ६४ ॥ अन्धकारे तथा घोरे लक्षस्तानहनत्परान् ॥ एकदा
लक्ष्यसंख्याकान् भूतले स न्यपातयत् ॥ ६५ ॥ एवं तेन हताः सर्वे गणसेनाचरा नराः ॥ सरथौ
गणपुत्रौ तौ गृहीत्वागाद्विनायकम् ॥६६॥ लक्षः स्वं विजयं तस्मै नमस्कृत्य न्यवेदयत् ॥ ॥ लक्ष उवाच ॥

अखिला निहतास्तात गण एकोऽवशिष्यते ॥ ६७ ॥ मुक्तिं नय स्वहस्तेन हत्वैनं त्वं विनायक ॥
निहता ये त्वया हस्तैर्जीवा मुक्तिं गतास्तु ते ॥ ६८ ॥ सुलभः शूलपाणिश्च सरथौ विधृतौ मया ॥
गणपुत्रौ महावीर्यौ तद्राज्ये स्थापय प्रभो ॥ ६९ ॥ इति श्रीस्कन्दपुराणे चिन्तामण्युपाख्याने लक्षवर्ण-
विजयवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥

शिव उवाच ॥ सिद्धिपुत्रेण लक्षेण बलिना जयशालिना ॥ सरथौ राजपुत्रौ तौ ज्ञात्वा नीतावपीपलन्
॥ १ ॥ दैतेया लक्षयुद्धे ये नायुध्यन्जीवितेच्छया ॥ तेन नीतौ गणशिशू ज्ञात्वा ग्रन्थोऽवदद्गणम् ॥ २ ॥
ग्रन्थ उवाच ॥ शूलपाणिश्च सुलभो राजन्योद्धुं गतावुभौ ॥ सेनया चतुरङ्गिण्या शोभमानौ रणोत्सुकौ
॥३॥ कामवस्थां गतौ युद्धे तद्वृत्तान्तो विचार्यताम्॥ ॥ शिव उवाच ॥ एतस्मिन्नन्तरे कश्चिद्ययौ गणरथं
रयात् ॥४॥ कश्चिदुवाच ॥ वदति स्म गणं राजन्सरथौ तव बालकौ ॥ युध्यामानौ महाघोरौ शस्त्रास्त्रे
रणदुर्मदौ ॥५॥ पातयन्तौ रथेभाश्वान्वीरान्परचमूचरान् ॥ केनचिद्घोररूपेण निघ्नता सकलां चमूम्॥६॥
विधृतौ पुरुषव्याघ्रौ स्वसेनां गमितौ बलात् ॥ किमकारि ततस्तेन न जानीमो वयं प्रभो ॥७॥ शिव उवाच॥

तस्य वाचमिति श्रुत्वा शुशोच गणदैत्यराट् ॥ तस्मिन्नेव रणे मूर्च्छां शुष्कण्ठोऽगमद्गणः ॥८॥ ॥ गण उवाच ॥ हाहा सुलभ हा देव शूलपाणे गतः कुतः ॥ भवद्भ्यां विजिता वीरा देवाः सर्वे पराजिताः ॥ ९ ॥ दिग्गजा लोकपालाश्च यक्षराक्षसकिंनराः ॥ मनुष्योरगवर्गाश्च स कथं नु हतो रणे ॥ १० ॥ अद्यैवाहं गतो नाशं राज्यं नष्टं कुलं हतम् ॥ गता वीरा मम प्राणाः कथं तिष्ठाम्यहं पुनः ॥ ११ ॥ शिव उवाच ॥ विलापं कुर्वति गणे समाधानाय तेऽब्रुवन् ॥ ॥ प्रधाना ऊचुः ॥ अस्मिंश्चराचरे राजन्के न मृत्युं गताः प्रभो ॥ १२॥ पराक्रमेण वीर्येण बलेन परसैनिकान् ॥ निघ्नन्तो निहतास्तेऽपि नैव शोच्या नराधिप ॥ १३ ॥ शोकं नैव च कुर्वन्ति पुरुषा वीर्यशालिनः ॥ भवान्वयं च वीराश्च युध्यमानारिभिः सह ॥ १४ ॥ जीवन्तौ यदि तौ स्यातां बलान्मोच्यौ रिपोस्ततः ॥ ॥ शिव उवाच ॥ प्रधानोक्तं वचः श्रुत्वा क्रुधा तप्तोऽब्रवीद्गणः ॥ १५ ॥ ॥ गण उवाच ॥ इदानीं भक्षयिष्यामि रिपून्सर्वान्मुनिं चमूम् ॥ तत आज्ञापयच्चैवं रथं चालय सारथे ॥ १६ ॥ ॥ शिव उवाच ॥ अनुलक्ष्यारिसैन्यं स सारथिः स्यन्दनं रयात् ॥ अचालयद्राजरथं चेलुः सर्वेऽनुलक्ष्य तम् ॥१७॥ अमात्याश्वाश्च

वीराश्च गजारोहाः पदातयः ॥ क्षणार्धेन गतास्तत्र यत्रासीत्स विनायकः ॥१८॥ परशुं कमलं मालां बिभ्रतं
मोदकानपि ॥ चतुर्बाहुं वामभागे सिद्धिं च दधतं शुभाम् ॥ १९ ॥ बुद्धिं च दक्षिणे भागे वहन्तं
सिंहवाहनम् ॥ मुकुटेन विचित्रेण राजन्तं तेजसां निधिम् ॥ २० ॥ स्तूयमानं महाभक्त्या कपिलेन
महर्षिणा ॥ गणसेनाचराः सर्वे ददृशुस्तं विनायकम् ॥ २१ ॥ मनसा मेनिरे सर्वे नेदृशो वीक्षितः
पुमान् ॥ ततः प्राह गणः कोपात्कपिलं मुनिपुङ्गवम् ॥ २२ ॥ गण उवाच ॥ वद कोऽयं मुने शीघ्रं
स्थापितोऽस्ति त्वया पुमान् ॥ नो चेदेकेन बाणेन हन्यामेनं त्वया सह ॥२३॥ कामक्रोधाग्निना व्याप्तं
मदमोहसमन्वितम् ॥ निर्दयं मानसं यस्य स कथं मुनिरुच्यते ॥२४॥ येन संभाव्यतेऽनिष्टं परस्य तस्य
तद्भवेत् ॥ अतोऽद्य भविता नाशो मद्धस्तात्ते न संशयः ॥ २५ ॥ इति तद्वचनं श्रुत्वा कोपादाह गणं
मुनिः ॥ कपिल उवाच ॥ पातकानामनेकानां दोषाणां च पिताभिजित् ॥ २६ ॥ पुत्रोऽस्तीत्यकरोद्दुष्ट
गण इत्यभिधां तव ॥ यत्त्वया पीडिता देवा इन्द्राद्याश्चापि भूमिपाः ॥ २७ ॥ ऋषयः साधवः सर्वे
पातालवासिनोऽपि च ॥ तत्कर्मफलदानार्थमवतीर्णोऽयमीश्वरः ॥ २८ ॥ विनायकस्वरूपेण त्वामिदानीं

हनिष्यति ॥ ॥ शिव उवाच ॥ कपिलोदीरितं श्रुत्वा कोपाद्दीप्तोऽनलं वमन् ॥ २९ ॥ गृहीत्वेषून्पञ्च
गणो जघान तं गणाधिपम् ॥ एकेन मस्तकं पादमेकेनैकेन तद्भुजम् ॥३०॥ पादं हस्तं च मुकुटं भित्वा-
यातास्त्रयः शराः ॥ द्वौ यातौ निष्फलौ तस्य गणदैत्यस्य सायकौ ॥ ३१ ॥ दैत्यबाणहतः सोऽपि
मूर्छामाप विनायकः ॥ प्राप्य संज्ञां परशुना हन्ति स्म स रुषा विभुः ॥ ३२ ॥ दृष्टवान्परशुं वीरो गणः
सूर्यमिवापरम् ॥ सुतीक्ष्णं ज्वालया व्याप्तं कालानलनिभं शुभम् ॥३३॥ दहन्तं दशदिग्भागान्प्रलया-
नलसंनिभम् ॥ यदा तं सादरं द्रष्टुमुपचक्राम दैत्यराट् ॥ ३४ ॥ तदैवापातयच्छित्वा परशुस्तस्य मस्त-
कम् ॥ सपर्वतवना पृथ्वी चचाल सागरैः सह ॥ ३५ ॥ अभिजित्प्रमुखाः सर्वे रुरुदुः पतिते गणे ॥
॥ अभिजिदुवाच ॥ वृद्धं मां पितरं दीनं त्यक्त्वा यातः कथं गण ॥ ३६ ॥ निषिद्धोऽसि यतः पूर्वं
रुष्टः किं नु ममोपरि ॥ दृष्ट्वा मां नु कथं यातो भक्तिस्त्यक्ता मयि त्वया ॥ ३७ ॥ क्व गतं तव सामर्थ्यं
तेजो वीर्यं बलं तथा ॥ येनाक्रान्तास्त्रयो लोकाः कथं तद्धि लयं गतम् ॥ ३८ ॥ शिवदत्ता वराश्चापि
मिथ्या जाताः कथं गण ॥ कालेनापि कृतं कर्म विपरीतं प्रियार्भक ॥ ३९ ॥ अद्यापि न मया दृष्टा

जीवद्वृद्धा मृतार्भकाः॥ ॥शिव उवाच॥ शोचत्यभिजितीत्थं स ग्रन्थ ऊचे स्फुटं वचः ॥४०॥ यत्स्वर्ग्यं गण-
दैत्यस्य उचितं समयस्य च ॥ सुहृदो नैव मित्राणि रिपवस्ते मताः स्फुटम् ॥४१॥ स्वार्थाय रोदनं कुर्युर्न मृ-
तस्वार्थकारिणः ॥ क्षपयन्ति वृथा तस्य कर्मकालं जडा नराः ॥ ४२ ॥ भुवो भारं च कुर्वन्ति संस्थाप्य
गतमारुतम् ॥ यतोऽश्रु पतितं तेषां परेतस्य मुखं व्रजेत् ॥ ४३ ॥ तदुत्तिष्ठाभिजिद्राजंस्तस्योर्ध्वदे-
हिकं कुरु ॥ ॥शिव उवाच ॥ ततश्चक्रुः क्रियां सर्वे गणस्य पारलौकिकीम् ॥ ४४ ॥ अभिजित्प्रमुखाः
सर्वे ज्ञात्वा नप्त्रोरसंनिधिम् ॥ अथान्यस्मिन्सुदिवसे ग्रन्थेन सहितोऽभिजित् ॥ ४५ ॥ चिन्तामणि-
मणिं हस्ते धृत्वा शोकार्दितो भृशम् ॥ विनायकं च कपिलं ते प्रसादयितुं ययुः ॥ ४६ ॥ दृष्ट्वा तौ
प्रणिपत्यादौ विनायकमुनीश्वरौ ॥ अभिजिदीनया वाचा तत ऊचे विनायकम् ॥ ४७ ॥ ॥ अभिजि-
दुवाच ॥ त्वामेव न विजानन्ति त्वदीयांशा हि जन्तवः ॥ त्वदीयमवमानं च मोहाद्विदधते खलाः
॥ ४८ ॥ बहुपुण्यचयं प्राप्य मनुष्यवर्ष्मधारिणः ॥ उच्चैःपदमवाप्यापि यान्त्यधःपतनं तु ते ॥ ४९ ॥
तत्रापि ये त्वन्निहतास्ते यान्ति परमं पदम् ॥ इदानीमनुकंप्योऽहं त्वामेव शरणं गतः ॥ ५० ॥

धारणाध्यानयुक्तानां योगिनां यद्धृदि स्फुटम् ॥ भासते परमं ब्रह्म चक्षुर्भ्यां तन्मयेक्षितम् ॥ ५१ ॥
अस्मादृशानां जंतूनां तारणाय धृताऽऽकृतिः ॥ त्वद्दर्शनेन निःपापो जातोऽहं जगदीश्वर ॥ ५२ ॥
इदानीं प्रार्थयामीह त्वामेवाहं विनायक ॥ गृहाणेमं मणिं नाथ मुनिमेनं प्रसादय ॥ ५३ ॥ धन्यौ तौ
मम नप्तारौ याभ्यां दृष्टो भवान्प्रभुः ॥ सुलभः शूलपाणिश्च मोचनीयौ कृपानिधे ॥ ५४ ॥ आज्ञाप्यौ
गणराज्याय ग्रन्थश्चायं प्रधानकः ॥ त्वद्दर्शनजपुण्येन भजेतां भाग्यमुत्तमम् ॥ ५५ ॥ ममापि भ-
वता देयं ज्ञानं वैराग्यमुज्ज्वलम् ॥ अहं च कृपया मोच्यः कारागाराच्छरीरतः ॥ ५६ ॥ शिव उवाच॥
ततः सोऽमोचयद्देवो गणपुत्रौ विनायकः ॥ मणिं गृहीत्वा तस्मात्तु कपिलाय ददौ तदा ॥ ५७ ॥
जहर्ष कपिलः सोऽपि नत्वावोचद्विनायकम् ॥ ॥ कपिल उवाच ॥ गणं हत्वा महावीर्यं चिन्तामणिस्त्वया
हृतः ॥ ५८ ॥ चिन्तामणिरिति ख्यातं तव नाम भविष्यति ॥ अमुं चिन्तामणिं नाथ त्वमेव स्वी-
कुरु प्रभो ॥ ५९ ॥ शिव उवाच ॥ मुनिना कपिलेनासौ प्रार्थितोऽभिजितापि च ॥ मणिं चिन्ता-
मणिं धृत्वा शुशुभे स विनायकः ॥ ६० ॥ चिन्तामणिरिति ख्यातिं तदादि परमां दधौ ॥ कपिलस्य

गृहे जातः कापिलाख्यामतो ययौ ॥ ६१ ॥ दृष्ट्वा विनायकं चारुवदनं पुष्पवृष्टिभिः ॥ अवकीर्याब्रुवन्देवास्त्वन्नाम सुमुखेति च ॥ ६२ ॥ ततः सुमुखनाम्नापि देवो विख्यातिमाप सः ॥ तस्मिन्नेव क्षणे स्कन्दान्तर्दधे स विनायकः ॥ ६३ ॥ अभिजिन्नृसहितो ग्रन्थश्च पुरमाययौ ॥ इति ते कथितं स्कन्द गणस्य निधनं मया ॥ ६४ ॥ येन चिन्तामणिरिति सर्वपापहरं शुभम् ॥ सर्वविघ्नहरं पुंसां स्मरणात्कार्यसिद्धिकृत् ॥ ६५ ॥ धर्मस्यार्थस्य कामस्य मोक्षस्यापि च साधनम् ॥ विनायकस्य नामाभूत्तदप्युक्तं मया तव ॥ ६६ ॥ चिन्तामण्यवतारोऽयं द्वितीयस्ते मयेरितः ॥ दोषहृच्छृण्वतां नृणां किमन्यच्छ्रोतुमिच्छसि ॥ ६७ ॥ ॥ इति श्रीस्कन्दपुराणे स्कन्दशिवसंवादे चिन्तामण्युपाख्याने गणदैत्यवधो नाम सप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥

स्कन्द उवाच ॥ अत्याश्चर्यकरः शंभो मणिश्चिन्तामणिस्त्वया ॥ कथितो येन सेनायै दत्तं भोजनमुत्तमम् ॥ १ ॥ गणोऽप्यदर्शयद्येन कौतुकानि बहून्यपि ॥ यन्निमित्तं परोक्षा या शक्तिर्देवद्विजन्मनाम् ॥ २ ॥ साऽपरोक्षाभवत्तस्य कपिलस्य सदाशिव ॥ योगिनामप्यगम्यो यः सहसासौ वि-

नायकः ॥३॥ विषयोऽभूदिन्द्रियाणां कपिलस्य महात्मनः ॥ स कथं मुनिना तेन कपिलेन स्पृहावता ॥
॥ ४ ॥ वसता गहनारण्ये कन्दमूलफलाशिना ॥ सृष्टिरक्षणसंहारगुप्तशक्तिमता शिव ॥ ५ ॥ इन्द्रि-
याश्वान्विजयता शोचितो हरणात्तथा ॥ प्राप्तश्चायं कुतः शंभो वद तत्कृपया मम ॥ ६ ॥ शिव उवाच॥
अत्र ते कथयिष्येऽहमितिहासं पुरातनम् ॥ विशाख श्रवणात्तस्य संशयस्ते गमिष्यति ॥७॥ कदाचि-
द्देवतावृन्दैरिन्द्रो भूर्लोकमाययौ ॥ मुनीनामाश्रमान्पश्यन्स्थितिं भूर्लोकवासिनाम् ॥ ८ ॥ भ्रमता पुरु-
हूतेन आश्रमो ददृशे मुनेः ॥ कपिलस्य महापुण्यो नानावृक्षान्वितः शुभः ॥ ९ ॥ सुच्छायः सुफलो
रम्यः सुशीतलजलोऽमलः ॥ मृगैर्व्याघ्रैर्वृकैर्वन्यगोभिर्व्याप्तः समंततः ॥ १० ॥ राजहंसैर्मयूरैश्च बकसा-
रसकोकिलैः ॥ पारावतकपोतैश्च शुकैर्युक्तः क्वचित्क्वचित् ॥ ११ ॥ नानाविद्याभ्यासपरैर्व्याप्तः शिष्य-
गणैः क्वचित् ॥ एलालवङ्गक्रमुकैर्नारिकेलैः सुशोभितः ॥१२॥ गायद्विद्याधरीव्याप्तनिकुञ्जो भृङ्गगुञ्जितः ॥
पुष्पमूलफलाढ्यश्च सुसमित्कुशकन्दकः ॥ १३ ॥ क्षुत्तृड्भ्यां पीडितश्चेन्द्रो धावयित्वा निजं हयम् ॥
तमाश्रममुपागम्य स्नानं चक्रे ससैनिकः ॥ १४ ॥ निवर्त्य सकलं नित्यमेकाकी मुनिमाययौ ॥ जि-

तेन्द्रियं कृशं शान्तं जपन्तं सिद्धिशालिनम् ॥ १५ ॥ जितक्रोधं जिताहारं तपस्तेजोयुतं शुभम् ॥
वेदवेदार्थतत्त्वज्ञं सर्वविद्याविशारदम् ॥ १६ ॥ देवपूजाकरं नित्यमग्निशुश्रूषणे रतम् ॥ अध्यापयन्तं
वेदान्तान्ब्रह्मिष्ठं ब्रह्मवादिनम् ॥ १७ ॥ ध्यायन्तं परमं धाम योगाभ्यासवशीकृतम् ॥ भूतभाविगता-
र्थज्ञं समलोष्टाश्मकाञ्चनम् ॥ १८ ॥ मनसा सृष्टिसंहारं कल्पयन्तं निजेच्छया ॥ भूतानां हितकर्तारं
सर्वभूतसमं तदा ॥ १९ ॥ कपिलं पृष्टवानिन्द्रो मुनीनां प्रवरं मुदा ॥ साष्टाङ्गं प्रणनामाथ तूष्णीमास
पुरंदरः ॥ २० ॥ ध्यानं विसृज्य स मुनिर्ज्ञात्वा देवपतिं च तम् ॥ कृतप्रणाममासीनं काङ्क्षमाणं वचो-
मृतम् ॥ २१ ॥ प्राहैकाकी कथं यातो वदस्वेन्द्र ममाश्रमम् ॥ कापिलं वाक्यमाकर्ण्य बद्धाञ्जलिरभा-
षत ॥ २२ ॥ इन्द्रस्तं कपिलं सेनां स्थापितां जलसंनिधौ ॥ इन्द्र उवाच ॥ द्विजमग्निं शिवं विष्णुं
गामश्वत्थं सुरालयम् ॥ २३ ॥ ज्ञात्वा यो लङ्घयेत्स्वामिन् स निःश्रीकः पुमान्भवेत् ॥ आगतोऽस्मि
द्विजश्रेष्ठ भवन्तं द्रष्टुमीश्वरम् ॥ २४ ॥ त्वद्दर्शनसुधापानादृते मेऽद्य क्षुधातृषे ॥ त्वत्सरोमज्जनादेनो लयं
यातं ममानघ ॥ २५ ॥ निरीक्ष्य पदयुग्मं ते कृतकृत्योऽस्मि भूसुर ॥ आज्ञां कुरु गमिष्येऽहं सेनासं-

मीलितो द्विजम् ॥ २६ ॥ शिव उवाच ॥ श्रुत्वैवं वचनं तस्य जगाविन्द्रं मुनिः पुनः ॥ मुनिरुवाच ॥
अपराह्ने कथं यासि निराहारो ममाश्रमात् ॥ २७ ॥ यं जपन्ति पुरैव त्वां कर्ममात्रे मुनीश्वराः ॥ स
पुण्यनिचयान्मेऽद्य सुराणामधिपः स्वयम् ॥ २८ ॥ आश्रमं प्राप्तवान्यस्मात्तस्मात्त्वां प्रार्थयेऽधुना ॥
कुरुष्वानुग्रहं शक्र सेनामाहूय सत्वरम् ॥ २९ ॥ भुङ्क्ष्व किंचिन्मया दत्तं ततो याह्यमरावतीम् ॥
शिव उवाच ॥ इत्युक्त्वा प्रेषितस्तेन कपिलेन महर्षिणा ॥३०॥ देवानानयितुं शिष्य इन्द्रे तत्रैव तिष्ठति ॥
शिष्येणाकारिता देवा मुनिदर्शनलालसाः ॥ ३१ ॥ त्वरयाऽऽजग्मुरिन्द्रः समुनिर्यत्रावतिष्ठति ॥ आग-
तेष्वथ देवेषु पुपूजे मुनिरादरात् ॥ ३२ ॥ इन्द्रं देवांस्तथा चान्यान्ब्राह्मणान्कपिलस्तदा ॥ अमृतं कल्प-
यामास स्मरणात्परमात्मनः ॥ ३३ ॥ प्रभावात्स्वस्य तपसो देवतुष्टिकरं परम् ॥ यस्य देवस्य या शक्ति-
स्तस्मै तावद्ददौ मुनिः ॥ ३४ ॥ पृथिव्यमृतपानेन देवाः सर्वे विसिस्मिरे ॥ प्रससाद महेन्द्रोऽस्मै किंचि-
द्देयं विचारयत् ॥ ३५ ॥ आहूय मारुतं शक्रः प्राह कर्णेऽतिशीघ्रगम् ॥ शक्र उवाच ॥ मरुद्गच्छाम-
रावत्यां कोशान्तर्मणिरस्ति मे ॥ ३६ ॥ विष्णुना सुप्रसन्नेन दत्तो मह्यं पुरैव यः ॥ चिन्तामणिरिति

ख्यातस्तमानय ममाज्ञया ॥ ३७ ॥ ॥ शिव उवाच ॥ तदाज्ञां शिरसा वन्द्य वेगाद्गत्वामरावतीम् ॥
समीरो मणिमादाय क्षणाद्यातो बिडौजसम् ॥ ३८ ॥ मणिमादाय तस्मात्तं मारुतात्पाकशासनः ॥
सुप्रीत्या तं ददौ तस्मै कपिलाय महर्षये ॥ ३९ ॥ आशिषोऽथ ददौ तस्मै शक्राय कपिलो मुनिः ॥
प्राणतुल्यं बबन्धाथ गले चिन्तामणिं मुदा ॥ ४० ॥ शुशुभे मणिना तेन सहस्रांशुरिव द्विजः ॥ दे-
वाश्च मुनिशिष्याश्च तदा सर्वे जहर्षिरे ॥ ४१ ॥ गृहीत्वाज्ञां नमस्कृत्य सशिष्यं कपिलं मुनिम् ॥ देवा-
न्सर्वानथादाय जगामेन्द्रोऽमरावतीम् ॥ ४२ ॥ एवं चिन्तामणिः प्राप्तः कपिलेनापि षण्मुख ॥ मयाते
कथितश्चायमितिहासः पुरातनः ॥ ४३ ॥ नरो यः शृणुयाद्भक्त्या चिन्तामणिसमागमम् ॥ चिन्ति-
तानाप्नुयादर्थान्निश्चिन्तः सुखवान्भवेत् ॥ ४४ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये स्कन्दशिवसंवादे
चिन्तामण्युपाख्याने कपिलचिन्तामणिप्राप्तिर्नामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥
श्रीशिव उवाच ॥ शृणु स्कन्द प्रवक्ष्येऽहमवतारं तृतीयकम् ॥ विनायकेन देवेन ध्रियमाणं स्वली-
लया ॥ १ ॥ गजानन इति ख्यातं दुष्टसंहारकारकम् ॥ तारकं सर्वलोकानां भुवो भारापहारकम् ॥२॥

स्थापकं सर्वधर्माणां भक्तानां मुक्तिदायकम् ॥ रक्षकं सर्वसाधूनां महाविघ्नौघनाशकम् ॥ ३ ॥ सत्यलोके
सुखासीनो जजृम्भे कमलासनः ॥ कदाचित्तस्य मुखतो निःसृतः पुरुषो महान् ॥४॥ जपावदतिरक्ताङ्गः
क्रूरास्यः श्यामलालकः ॥ आकर्णनयनश्चारुवदनस्तेजसान्वितः ॥ ५ ॥ यदङ्गगन्धसङ्गेन सुगन्धाः ककु-
भोऽभवत् ॥ दृष्ट्वा तमब्रवीद्ब्रह्मा चकितश्चेतसा भृशम् ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ भीमकाय महाबाहो
कुतस्त्वं पुरुषाऽऽगतः ॥ किमर्थं कस्य पुत्रश्च वद सर्वं ममाग्रतः ॥ ७ ॥ ॥ शिव उवाच ॥ ब्रह्मणो
गिरमाकर्ण्य जृम्भाजो निजगाद तम् ॥ ॥ जृम्भाज उवाच ॥ अहं तव मुखाज्जातस्तव पुत्रः प्रजा-
पते ॥ ८ ॥ चराचरस्य निर्मातस्तात किं मम पृच्छसि ॥ चतुरानन मे देहि स्थलं नाम च सुन्दरम्
॥ ९ ॥ ॥ शिव उवाच ॥ इति तद्भाषितं श्रुत्वाऽऽचचक्षे तं प्रजापतिः ॥ ब्रह्मोवाच ॥ सिन्दूर इति ते
नाम ख्यातं लोके भविष्यति ॥ १० ॥ यत्र क्वापि महीदेशे तिष्ठ त्वं स्वेच्छयार्भक ॥ ददामि च वरां-
स्तुभ्यं त्रैलोक्यविजयोऽस्तु ते ॥ ११ ॥ इन्द्रादिदेववृन्देभ्यो नच विष्णोर्भयं तव ॥ शस्त्रास्त्राणामव-
ध्यस्त्वं सर्वेषां च महीभृताम् ॥ १२ ॥ यं वेष्टयसि बाहुभ्यां भस्मसात्स भविष्यति ॥ ॥ शिव उवाच ॥

इति ब्रह्मवचः श्रुत्वा सिन्दूरो हृष्टमानसः ॥१३॥ ब्रह्माणं तं नमस्कृत्य मधुरं वाक्यमब्रवीत् ॥ ॥सिन्दूर
उवाच ॥ ब्रह्मन्दयानिधे स्वामिंस्त्वयाहमनुकम्पितः ॥ १४ ॥ विना यज्ञेन दानेन तपसा दुष्करेण च ॥
शिव उवाच ॥ इत्युक्त्वा प्रययौ ब्रह्मलोकात्स सिन्दुरो मुदा ॥ १५ ॥ मार्गे सोऽतर्कयत्किं नु ब्रह्मणाहं
प्रतारितः ॥ उत तथ्यं मम प्रोक्तं गत्वा द्रक्ष्यास्मि सांप्रतम् ॥ १६ ॥ विचिन्त्येत्थं ययौ तत्र यत्रासीच्च
चतुर्मुखः ॥ तं[1]मेव वेष्टितुं चक्रे बाहुभ्यां सिन्दुरः खलः ॥ १७ ॥ जगर्ज च मुदा तेन चकम्पे
भुवनत्रयम् ॥ ब्रह्माथ धैर्यमास्थाय तमूचे भयविह्वलः ॥ १८ ॥ ॥ ब्रह्मोवाच ॥ कथं मेऽभून्मतिर्दुष्टा
यया दत्ता वरास्तव ॥ न[2] ज्ञातं मे मतिर्दुष्टा पीडकोऽयं भविष्यति ॥ १९ ॥ मामेव वेष्टितुं मूढ मद्वरात्त्वं
मनोऽकृथाः ॥ विनायकस्ते नाशाय शीघ्रं ह्यवतरिष्यति ॥ २० ॥ ॥ शिव उवाच ॥ पुनर्गर्जन्तमालोक्य
सिन्दूरं कमलासनः ॥ उच्चचालासनात्तस्माद्वैकुण्ठं गन्तुमुत्सुकः ॥ २१ ॥ ब्रह्माणं यान्तमालोक्य
सिन्दूरोऽनुजगाम तम् ॥ क्षणार्धेन गतौ तत्र यत्रासीत्स रमापतिः ॥ २२ ॥ दृष्ट्वा विष्णुं सुखासीनं

१ तं वेष्टयितुमारेभे इति स्यात्। २ ‘न ज्ञाता ते मतिर्दुष्ट’ इति पाठान्तरम्।

प्रणनाम चतुर्मुखः ॥ ब्रह्माणं म्लानवदनं दृष्ट्वा पप्रच्छ केशवः ॥ २३ ॥ ॥ विष्णुरुवाच ॥ कथं ते
वदनं म्लानं कुतः श्वासः कुतो भयं॥ पृष्ठतः पुरुषः कोऽसौ वद ब्रह्मन्नशेषतः ॥ २४ ॥ ॥ ब्रह्मोवाच ॥
मयासनोपविष्टेन जृम्भितं पुरुषोत्तम ॥ ततोऽयं पुरुषोऽकस्माद्ददृशे चारुगन्धभृत् ॥ २५ ॥ अनेन
याचितं मह्यं स्थानं नाम च सुन्दरम् ॥ सिन्दूरेति च नामास्मै मया दत्तं सुशोभनम् ॥ २६ ॥ स्वेच्छ-
या वसतिर्दत्ता वराश्चान्ये सुदुर्लभाः ॥ यं वेष्टयसि बाहुभ्यां भस्मसात्स भविष्यति ॥ २७ ॥ वरोऽय-
मपि दत्तोऽस्मै वेष्टितुं माममगादयम् ॥ तद्भयादहमायातः पुरस्ते कमलापते ॥ २८ ॥ मामुपालक्ष्य
यातोऽयं कृतघ्नः पुरुषः खलः ॥ ॥ शिव उवाच ॥ तदाकर्ण्य वचो ब्राह्मं प्रोवाच मधुसूदनः ॥ २९ ॥
विष्णुरुवाच ॥ अविचाराद्वरा दत्ताः सर्वदेवभयप्रदाः ॥ न श्रुता नेक्षिता ब्रह्मन्नानृता ते सरस्वती
॥ ३० ॥ अतः स सह यातोऽत्र यतस्त्वं कमलासन ॥ ज्ञातं चानेन सामर्थ्यं तव ब्रह्मन्ममापि च ॥३१॥
इदानीं वरगर्वेण त्रैलोक्यं पीडयिष्यति ॥ यदा शिवः कृपां कुर्याद्दुष्टसंहारकारकः ॥ ३२ ॥ तदैवास्य
भवेन्नाशो नान्यथा चतुरानन ॥ ॥ शिव उवाच ॥ यत्कृतं तेन दैत्येन सिन्दूरेण षडानन ॥ ३३ ॥

यथा तस्याभवन्नाशस्तदेव शृणु सादरम् ॥ विष्णुं दृष्ट्वावदद्दैत्यः कुरु युद्धं मया सह ॥ ३४ ॥ नोचे-
त्त्वां भस्मसात्कुर्यां ब्रह्माणं बाहुवेष्टनात् ॥ अथोवाच हरिर्दैत्यं सिन्दूरं मधुरं वचः ॥ ३५ ॥ ॥
विष्णुरुवाच ॥ यः सत्त्वगुणसंपन्नः सर्वभूतहिते रतः ॥ निर्विकारो निरीहो यः स कथं योद्धुमुत्सहेत्
॥ ३६ ॥ अयं ब्रह्मा वेदनिधिः सर्जनैकरतः सदा ॥ अध्येता वेदशास्त्राणां स कथं योत्स्यते त्वया
॥ ३७ ॥ अस्त्येकः पुरुषो दैत्य कैलासे गिरिजायुतः ॥ चराचरस्य संहर्ता देवानामधिपः प्रभुः ॥३८॥
युद्धाय स समस्ते स्यात्तं याहि त्वं रणोत्सुक ॥ निपीय वैष्णवीं वाणीं सिन्दूरो हृष्टमानसः ॥ ३९ ॥
कृत्वोड्डानं ययौ शीघ्रं कैलासं युद्धलालसः ॥ दिग्गजा लोकपालाश्च देवाः सर्वे च राक्षसाः ॥ ४० ॥
पातालवासिनो यक्षा मनुष्याश्च सपर्वताः ॥ सरितः पक्षिसंघाश्च सिंहव्याघ्रमृगादिकाः ॥ ४१ ॥
तदुड्डानभयत्रस्ता हाहाकारं व्यधुस्तदा ॥ उडुगर्भं मुमोच द्यौस्तद्भयाद्भुवि योषितः ॥ ४२ ॥ एवं यातः
स कैलासं जपन्तं दृष्टवाञ्शिवम् ॥ विभूतिधवलं शान्तं जटिलं कृत्तिवाससम् ॥ ४३ ॥ खट्वाङ्गपा-
णिं ध्यायन्तमपर्णासहितं विभुम् ॥ बाहुभ्यां वेष्टितुं तुच्छं मनसा मनुते स्म सः ॥ ४४ ॥ इमां स्त्रियं

गृहीत्वाहमस्य यास्ये रसातलम् ॥ विचिन्त्यैवं बभाराशु गिरिजाकबरीं खलः ॥ ४५ ॥ शोकेन पार्वती दीना मूर्च्छया पतिता भुवि ॥ शंकरं प्रणिपत्याशु प्रार्थयामास तं तदा ॥ ४६ ॥ ॥ पार्वत्युवाच ॥ जगत्संहारकारी त्वं किमर्थं मौनमास्थितः ॥ अयं दुष्टतमः कोपि कर्षते मां बलाद्विभो ॥ ४७ ॥ त्यज ध्यानं च मौनं च दर्शय स्वपराक्रमम् ॥ अस्माद्दुष्टतमात्स्वामिन्मामाशु मोचय प्रभो ॥ ४८ ॥ नोचेदस्य करस्पर्शाद्भस्मसात्स्या सदाशिव ॥ ॥ शिव उवाच ॥ एवं सा वदती काली नीता दैत्येन तत्क्षणात् ॥ ४९ ॥ नीयमानां तु दैत्येन दृष्ट्वा तां पार्वतीं गणाः ॥ चक्रुराक्रन्दनं सर्वे प्रोचुश्च स्कन्द मां क्रुधा ॥ ५० ॥ ॥ गणा ऊचुः ॥ सर्वेषां प्राणिनां कर्मफलदातासि शंकर ॥ आराध्यः सर्वजन्तूनामनीहस्त्वं जितान्धक ॥ ५१ ॥ सुखदुःखजराजन्मविलयानां त्वमाश्रयः ॥ ध्यानेन तपसा किंचित्फलं नैवास्ति ते विभो ॥ ५२ ॥ उन्मीलयाक्षिणी शंभो त्रिपुरारे जगत्पते ॥ उमायै क्रन्दमानानामस्माकं करुणां कुरु ॥ ५३ ॥ संहारशक्तिं ते स्वामिन्नाविष्कुरु सदाशिव ॥ ॥ शिव उवाच ॥ इति तद्वचनं श्रुत्वा चोन्मील्य नयने भृशं ॥ ५४ ॥ पप्रच्छ तान्गणान्सर्वानखिलज्ञोऽप्यहं प्रिय ॥ किं जातं

किं कृतं कर्म कोलाहलः कुतोऽभवत् ॥ ५५ ॥ प्रत्यूचुस्ते गणाः शंभुं केनचित्कालरूपिणा ॥ रुदती क्रन्दती नीता धृत्वा तत्कबरीमुमा ॥ ५६ ॥ इति तद्वचनं श्रुत्वारुरोह नन्दिनं हरः ॥ गृहीत्वा डमरुं हस्ते त्रिशूलमपरे शुभम् ॥ ५७ ॥ निमिषार्धेन दैत्यं तं दृष्ट्वा डमरुणाहनत् ॥ तमुवाच ततः कोपाद्वीक्ष्योमां कबरीधृताम् ॥ ५८ ॥ यद्यस्ति जीवनेच्छा ते त्यजेमां पार्वतीं खल ॥ नोचेत्त्वां भस्मसात्कुर्यां दुष्टेदानीं क्षणार्धतः ॥ ५९ ॥ इत्युक्तः सोऽभिदुद्राव बाहुभ्यां वेष्टितुं मम ॥ अकस्माद्ब्राह्मणः कश्चिद्वीक्षितोऽद्भुतदर्शनः ॥ ६० ॥ उवाच ब्राह्मणो दैत्यं सिन्दूरं मदगर्वितम् ॥ ब्राह्मण उवाच ॥ कुरु युद्धमनेन त्वं जयश्रीर्वृणुयात्तु यम् ॥ ६१ ॥ आह्या तेन सुरूपेयमत्र साक्षी द्वयोरहम् ॥ शिव उवाच ॥ इत्युक्त्वा ब्राह्मणः स्कन्द चकार कौतुकं महत् ॥६२॥ मध्ये तत्याज परशुमुभयोर्योद्धुमिच्छतोः ॥ धावतो हृदि दैत्यस्य सिन्दूरस्यापतच्च सः ॥ ६३ ॥ अहं च सिन्दुरश्चापि चिरकालमयुध्यताम् ॥ अहनत्परशुर्युद्धेऽदृश्यमानोऽसकृच्च तम् ॥ ६४ ॥ क्षीणशक्तिरभूद्दैत्य आघातात्तस्य षण्मुख ॥ ब्राह्मणः पुनरूचे तं सिन्दूरं क्षीणशक्तिकम् ॥ ६५ ॥ ब्राह्मण उवाच ॥ शंकरेण जिता देवी कुरु स्वप्राणरक्षणम् ॥

नोचेत्त्रिशूलघातेन शंकरस्त्वां हनिष्यति ॥६६॥ शिव उवाच ॥ ब्राह्मणस्य वचः श्रुत्वा त्यक्त्वा हैमवतीं शुभाम् ॥ संक्षुब्धमानसो दैत्यः सिन्दूरो भूतलं ययौ ॥ ६७ ॥ गिरिजा तं ततः प्राह गते दैत्ये द्विजं मुदा ॥ ॥ उमोवाच ॥ मोचिताहं त्वया ब्रह्मन् सिन्दूराद्दुष्टमानसात् ॥ ६८ ॥ आश्रमो भवतः कुत्र कोऽसि त्वं कृपया वद ॥ ॥ शिव उवाच ॥ गिरिजागिरमाकर्ण्य ब्राह्मणो हृष्टमानसः ॥ ६९ ॥ त्यक्त्वा तं वाडवं वेषं निजं रूपमदर्शयत् ॥ ततः सा विस्मिता देवी जगद्धात्री जगन्मया ॥ ७० ॥ विनायकं चतुर्बाहुं सायुधं सिंहवाहनम् ॥ सिद्धिबुद्धियुतं नित्यं सर्वार्थसाधकं विभुम् ॥ ७१ ॥ उरगोदरमारात्सा पार्वती पश्यति स्म तम् ॥ उवाच स प्रसन्नात्मा गिरिजां तां विनायकः ॥ ७२ ॥ ॥ ॥ विनायक उवाच ॥ ब्रह्माद्या मुनिमुख्याश्च तथैवान्ये हि जन्तवः ॥ आराधनाद्विरोधात्ते मुक्ताः संसृतिसागरात् ॥ ७३ ॥ यत आविर्भवन्त्यन्ये क ईशो मोचितुं नु ताम् ॥ इदानीं यद्वदे मातस्तत्स्मर्तव्यं त्वयान्वहम् ॥ ७४ ॥ यतोयं मदगर्वेण सिन्दूरस्त्वामपीडयत् ॥ अतोऽहमस्य नाशार्थं भविष्यामि तवात्मजः ॥ ७५ ॥ ॥ शिव उवाच ॥ इत्युक्त्वान्तर्हितः सोऽथ यातोहं गिरिजान्वितः ॥ आरुह्य नन्दिनं

धाम निजं कैलासमात्मनः ॥ ७६ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये शिवस्कन्दसंवादे पार्वतीवरप्रदानं नाम नवमोऽध्यायः ॥ ९ ॥ ॥ ॥ ॥ ॥

॥ श्रीसांब उवाच ॥ पृथिव्यां तेन दैत्येन प्रारम्भ्युपद्रवो महान् ॥ राजानो वीरमुख्याश्च भस्मत्वं गमिता बलात् ॥ १ ॥ ब्राह्मणा निहताः केचित्केचिच्च ताडिता द्विजाः ॥ श्रोत्रिया निहताः केचित्केषांचिद्योषितो हृताः ॥ २ ॥ केषांचिन्निहताः पुत्राः केषांचिज्ज्वालिता गृहाः ॥ अग्निहोत्राणि सर्वाणि यत्र पात्राण्यनेकशः ॥ ३ ॥ यज्ञवृक्षा ऋषिगृहास्तडागानि सरांसि च ॥ भग्नानि तेन दैत्येन देशे देशे पुरे पुरे ॥ ४ ॥ अपुरोडाशिनो देवा इन्द्राद्या दुःखकर्शिताः ॥ ब्रह्माणं त्वरया जग्मुः शंसुर्दैत्यस्य चेष्टितम् ॥ ५ ॥ ब्रह्मणा चोदिताः सर्वे सिद्धिदं तं विनायकम् ॥ सर्वे ते तुष्टुवुर्देवं परमात्मानमीश्वरम् ॥ ६ ॥ ॥ देवा ऊचुः ॥ यत्सत्तयाखिलमिदं ब्रह्मा विष्णुश्चराश्चरम् ॥ यतोऽग्निरापः पृथिवी वायुराकाशमेव च ॥ ७ ॥ आदित्यश्चन्द्रमाः स्वर्गो नक्षत्राणि दिशो दश ॥ पर्वताः सरितो यक्षा नागा रक्षांसि गुह्यकाः ॥ ८ ॥ मनुष्याः पशवो गावो नानाभूतानि जन्तवः ॥ उत्पत्तिस्थितिसंहारान्प्राप्नुव-

न्ति नताः स्म तम् ॥ ९ ॥ गुणत्रयत्रिसूत्राय गुणातीताय ते नमः ॥ अनेकोदरसंस्थायानादिसिद्धाय
ते नमः ॥ १० ॥ नानारूपभृते तुभ्यं भक्तसंरक्षकाय च ॥ दैत्यसंतप्तमनुजदुःखनाशाय ते नमः
॥ ११ ॥ ब्राह्मणानां विनाशाय सिन्दूरो धर्मलुप्तये ॥ अस्माकं दुःखहेतुश्च त्वयायं निर्मितः कथम्
॥ १२ ॥ दीनानां त्वमनाथानां नाथश्च गीयसेऽखिलैः ॥ अतोऽस्मात्रक्ष देवेश सिन्दूरस्य विनाशनात् ॥ १३ ॥ ॥ शिव उवाच ॥ करुणोदीरितं श्रुत्वा देवानां जगदीश्वरः ॥ सुप्रीतो देवसंस्तुत्याऽऽविरासीत्स विनायकः ॥ १४ ॥ उवाच नमतो देवानिदं स्तोत्रं प्रियं मम ॥ यः पठेत्परमं भक्त्या तस्य
दुःखं न विद्यते ॥ १५ ॥ दुःखप्रशमनं नाम स्तोत्रमेतद्भवत्कृतम् ॥ शृणुयाच्छ्रावयेद्यस्तु चतुर्थ्यां
पुरतो मम ॥ १६ ॥ तस्य दुःखं च रोगं च हरिष्ये परमापदः ॥ दास्ये च परमप्रीतः कामानन्यान्यथेप्सितान् ॥ १७ ॥ अहं गौरीसुतो भूत्वा सिन्दूरं हन्मि सांप्रतम् ॥ गजानन इति ख्यातिं यास्यामीह त्रिविष्टपम् ॥ १८ ॥ स्थानानि वः प्रदास्यामि हत्वा दुःखं तु तत्कृतम् ॥ ॥ शिव उवाच ॥ इत्युक्त्वान्तर्हितो देवः परमात्मा विनायकः ॥ १९ ॥ अवतारान्तरं धर्तुं संभूतो गिरिजोदरे ॥ ववर्ध गिरि-

जागर्भे आननन्द च पार्वती ॥ २० ॥ कात्यायनी कदाचिन्मां स्कन्दाह रहसि स्थितम् ॥ ॥ उमोवाच ॥ अस्ति मे दोहदः स्वामिन्वने क्रीडां त्वया सह ॥ २१ ॥ कामये सुतरां रम्ये सुगन्धे च सुशीतले ॥ कर्तव्या भूतले नाथ यदि ते मय्यनुग्रहः ॥२२॥ ॥शिव उवाच ॥ श्रुत्वाहं गिरिजावाक्यं कौतुकाविष्टमानसः ॥ वामाङ्के गिरिजां कृत्वा रुरोह नन्दिनं शुभम् ॥ २३ ॥ तदैव भूतलं यातः सगणो गहनं वनम् ॥ बभ्राम न ददर्शाहं यदा रम्यं तु काननम् ॥ २४ ॥ तदैव वीक्षितं स्कन्द पर्यलीकाननं मया ॥ अनेकवृक्षसंपन्नं शुकसारिकशोभितम् ॥ २५ ॥ सिंहशार्दूलसंघैश्च नानाविधमृगैर्युतम् ॥ वापीकूपतडागैश्च कासारैर्निर्झरैरपि ॥ २६ ॥ जातीचम्पकमालाभिः कमलैश्च सुशोभितम् ॥ पुष्पवृक्षैरनेकैश्च नानापक्षिगणैस्तथा ॥ २७ ॥ कदलीनिःसरच्चन्द्रसुशीतलशिलातलम् ॥ रसालश्रीफलैर्युक्तं जम्बूजम्बीरशोभितम् ॥ २८ ॥ सौवीरपनसैर्जुष्टमिङ्गुद्यसनराजितम् ॥ उन्मत्तपिचुमन्दारकपित्थचिञ्चिणीयुतम् ॥ २९ ॥ चन्दनागरुताम्बूलीनारिकेलीवृतं क्वचित् ॥ एवं रम्यं वनं दृष्ट्वा चिक्रीडाऽहं तया सह ॥ ३० ॥ चिक्रीडुश्च गणाः सर्वे जगुश्च ननृतुः परे ॥ उवासाहं चिरं तत्र पार्वत्या च गणैः

सह ॥ ३१ ॥ कृत्वा तु मण्डपं स्थूलं नानाशोभाढ्यमद्भुतम् ॥ बभञ्ज मण्डपं तं मे मम भक्तो गजासुरः ॥ ३२ ॥ मुमुक्षुर्जातिसंस्मर्ता जपन्तं वीक्ष्य मां सुत ॥ ॥ स्कन्द उवाच ॥ तव भक्तः कथं शंभो गजयोनौ बभूव ह ॥३३॥ कथं जातिस्मरश्चासौ क आसीत्पूर्वजन्मनि ॥ एतन्मे कृपया देव वक्तुमर्हसि शंकर ॥३४॥ ॥ शंकर उवाच ॥ स्कन्द चेतः स्थिरं कृत्वा शृणु यत्पृष्टवानसि ॥ सांप्रतं कथयिष्यामि गजासुरकथानकम् ॥ ३५ ॥ पुरायुगे स राजासीन्नीतिज्ञो लोकपालकः ॥ लक्ष्मीवान् रूपसंपन्नो वेदशास्त्रार्थकोविदः ॥ ३६ ॥ देवार्चनरतो नित्यमात्मविद्याविशारदः ॥ दशाष्टौ च पुराणानि धर्मजिज्ञासयाशृणोत् ॥ ३७ ॥ महेश इति नाम्नासौ विख्यातो भुवनत्रये ॥ एकदा स्वगृहे राजा सुखासीनोभवन्मुदा ॥ ३८ ॥ स्वर्गादायान्तमालोक्य प्रणनाम गुरुं तदा ॥ वक्तारं सर्वविद्यानां विधिना समपूजयत् ॥ ३९ ॥ निवेद्य चासनं पूर्वमर्घ्यपाद्यादिभिः क्रमात् ॥ पूजितः परया भक्त्या संतुतोष बृहस्पतिः ॥ ४० ॥ प्रसन्नमानसो भूपं महेशं प्रशशंस सः ॥ ॥ बृहस्पतिरुवाच ॥ नेक्षितस्त्वादृशो राजा न श्रुतोऽस्ति रसातले ॥४१॥ विनयाद्धर्मबुद्ध्या च नीत्या रूपेण संपदा ॥ या श्रुता स्वर्गलोके

ते कीर्तिर्दृष्टाद्य सा नृप ॥ ४२ ॥ अयं ते प्रणतो मूर्धा वन्द्यः स्यात्सर्वदेवतैः ॥ ॥ शिव उवाच ॥ गुरोर्गिरमथाकर्ण्य पप्रच्छ तं महीपतिः ॥ ४३ ॥ महेशभूपतिरुवाच ॥ तदेवमाशीर्वचनं कदा सत्यं भविष्यति ॥ ॥ शिव उवाच ॥ प्रत्युवाच गुरुस्तत्र पृच्छन्तं तं महीपतिम् ॥ ४४ ॥ ॥ बृहस्पतिरुवाच ॥ उत्पत्तिः प्राप्स्यते राजंस्त्वया योनौ गजस्य ह ॥ ऋतं मे भविता भूप वाक्यं ते तत्र जन्मनि ॥ ४५ ॥ हन्ता मुक्तिप्रदाता च तत्र ते स्याच्छिवः स्वयम् ॥ ॥ शिव उवाच ॥ राजानमित्थमुक्त्वा तं स्वर्ययौ स बृहस्पतिः ॥ ४६ ॥ महेशोऽपि निजां पृथ्वीं प्रशशास दयान्वितः ॥ कदाचिद्गच्छता तेन वीक्षितो नारदः पथि ॥ ४७ ॥ अवमत्य ययौ तं तु शप्तोऽसौ मुनिना रुषा ॥ इभास्यो भवितासि त्वमौद्धत्यादन्यजन्मनि ॥ ४८ ॥ गजासुर इति ख्यातिं यास्यसि त्वं नराधिप ॥ कैलासं प्राप्स्यसे स्थानमन्ते तस्यैव जन्मनः ॥ ४९ ॥ अवमत्य यतो यातो मामिदानीं नराधम ॥ इत्युक्त्वान्तर्हितो भूत्वा स्वर्ययौ नारदो मुनिः ॥ ५० ॥ गुरुनारदवाक्याभ्यां महेशो विस्मयं गतः ॥ गते बहुतिथे काले राजा पञ्चत्वमाप सः ॥ ५१ ॥ पर्यलीकानने स्कन्द करेण्वां जनुराप सः ॥ इभास्यो बलवान्वीरः सर्वत्रासौ नरा-

कृतिः ॥ ५२ ॥ देवमानवपूर्वेषु गन्धर्वेषु न यत्समः ॥ भ्रममाणः कदाचित्स आययौ मण्डपं मम॥५३॥ बभञ्ज करपातेन ज्ञात्वापि मम मण्डपम् ॥ संस्मरन्सर्वदा चित्ते गुरोर्वाक्यं च मामपि ॥५४॥ श्रुत्वा तं चकिता देवा यक्षाश्च मानुषोरगाः ॥ दृष्ट्वा तं परमं क्रूरं ज्ञात्वा भग्नं च मण्डपम् ॥ ५५ ॥ चकिता पार्वती प्राह जपन्तं मां षडानन ॥ ॥ पार्वत्युवाच ॥ बभञ्ज मण्डपं कश्चिन्नृतनुः कुञ्जराननः ॥ ५६ ॥ गणास्ते दशदिग्भागे तद्भयात्पेलुरीश्वर ॥ ॥ शिव उवाच ॥ उमोक्तं वचनं श्रुत्वा त्यक्त्वा जपमहं गतः ॥ ५७ ॥ दृष्ट्वा तं मण्डपं भग्नं रुरोषाहं क्षणार्धतः ॥ जघान तं त्रिशूलेन स्कन्द कोपाद्गजासुरम् ॥ ५८ ॥ मदेन सिक्तसर्वाङ्गमीषन्मीलितलोचनम् ॥ स पपात महीपृष्ठे त्रिशूलेन हते मया ॥ ५९ ॥ शिवाय नम इत्युक्त्वा जहौ प्राणान्गजासुरः ॥ मम भक्तो मयाज्ञायि स्वनामश्रवणाच्च सः ॥ ६० ॥ अभवद्बहुदुःखं मे निजभक्तवधात्तदा ॥ वरान्वरय दास्यामि कृपया स मयेरितः ॥ ६१ ॥ स जातिस्मर आहाथ मुक्तिं मे देहि शंकर ॥ ॥ गजासुर उवाच ॥ तव हस्तादभून्मृत्युरन्ते ते दर्शनं यतः ॥ ६२ ॥ उक्तं च गुरुणा पूर्वं भविष्यं नारदेन च ॥ ॥ शिव उवाच ॥ इति तद्गिरमाकर्ण्य प्रसन्नेनान्तरात्मना ॥ ६३ ॥

कैलासे वसतिस्तस्मै मया दत्ता स्वरूपता ॥ कैलासं तु गते तस्मिन् गृह्यास्य चर्म चाननम् ॥६४॥ चर्मणः परिधानं च मुखस्यापि प्रपूजनम् ॥ भक्तवात्सल्यभावेन क्रियतेऽद्यापि षण्मुख ॥ ६५ ॥ कृत्तिवासा इति ख्यातं नामाभूत्तेन मे प्रिय ॥ संसाररोगखिन्नानां भक्तानां तत्त्वमौषधम् ॥ ६६ ॥ कथयामि यतो वैद्यनाथ इत्यभिधां गतः ॥ ततो मे ते गणा याता दृष्ट्वा तं निहतं मया ॥ ६७ ॥ कृत्वाथ मण्डपं रम्यमुवासाहं तु पूर्ववत् ॥ एवं नारदवाक्येन जातोऽसौ गजयोनितः ॥६८॥ महेशो धर्मशीलत्वादासीज्जातिस्मरोपि च ॥ कार्तिकेय मयाख्यातं प्रसङ्गात् कौतुकं तव ॥ ६९ ॥ शृणुष्वावहितः स्कन्द प्रकृतं यत्कथानकम् ॥ ७० ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये शिवस्कन्दसंवादे गजासुरमुक्तिप्रदानं नाम दशमोऽध्यायः ॥ १० ॥ ॥ ॥ ॥ ॥ ॥

शिव उवाच ॥ एकदा सिन्दुरो दैत्यः सुखासीनो निजे गृहे ॥ स्वगुणं वर्णयामास वरगर्वेण मोहितः ॥ १ ॥ ॥ सिन्दुर उवाच ॥ त्रैलोक्यदशदिग्भागे मया कीर्तिः कृता बलात् ॥ अनायासेन लब्धास्ते ब्रह्मदत्ता वरा अपि ॥ २ ॥ ब्रह्मा विष्णुश्च रुद्रश्च तृणवद्गणिता मया ॥ अहं धन्यतमो लोके त्रिलोकी

विजिता मया ॥ ३ ॥ न देवानां मनुष्याणां न च पातालवासिनाम् ॥ नेतरेषां च जन्तूनां भयं मेऽस्ति कदाचन ॥ ४ ॥ ॥ शिव उवाच ॥ एवं वदति सिन्दूरे स्ववाणी तेन संश्रुता ॥ त्वादृशो नैव मूढोऽस्ति स्वयं स्वगुणकीर्तकः ॥ ५ ॥ किमिदं वदसे मोघं मिथ्याभूतं निजेच्छया ॥ संभूतस्ते विनाशाय गर्भोऽस्ति गिरिजोदरे ॥ ६ ॥ इति स्वर्गिरमाकर्ण्य चुक्षुभे हृदि दैत्यराट् ॥ उवाच क्रोधतप्ताङ्गो ध्रियतां योऽब्रवीदिदम् ॥ ७ ॥ ॥ सिन्दूर उवाच ॥ ममापि नाशकः को नु भविताऽत्र जगत्त्रये ॥ इदानीमेव तं गर्भं हनिष्ये उदरेशयम् ॥ ८ ॥ इत्युक्त्वा गर्जयामास त्रींल्लोकान्गर्जनादयम् ॥ उड्डीय त्वरया यातः कैलासं क्रूरया धिया ॥ ९ ॥ पश्यति स्म न तां देवीं सिन्दूरो गिरिजां यदा ॥ तदैव यातो भूर्लोकं बभ्राम च वने वने ॥ १० ॥ यत्र यत्र वने स्थाने यातस्तत्र न वीक्षिता ॥ पार्वती सिन्दुरेणाथ दृष्टा सा पर्यलीवने ॥ ११ ॥ प्रसुप्तां गिरिजां वीक्ष्य प्रसुप्तं मां च षण्मुख ॥ प्रविवेशोदरे दैत्यो मायया वायुरूपधृक् ॥ १२ ॥ छित्त्वा नखैः करे धृत्वा गर्भस्य मस्तकं बहिः ॥ निर्गत्य तच्छिरस्त्यक्तं विन्ध्याचलसमीपतः ॥ १३ ॥ यत्रास्ते शर्मदात्री सा नर्मदा दुरितापहा ॥ मुक्तिदा सर्वजन्तूनां तपसा सिद्धि-

दायिनी ॥१४॥ गणेशकुण्डं तत्राभूदपतद्यत्र तच्छिरः ॥ तदानीं नर्मदान्तस्थाः कुण्डान्तस्थास्तथोपलाः
॥ १५ ॥ आसन्ये रक्तवर्णाभा गणेशास्तेऽभवन्भुवि ॥ पार्वत्याथ मया वापि न ज्ञातं दैत्यकर्म तत्
॥ १६ ॥ एवं कृत्वा गतो दैत्यः सिन्दूरो निजमन्दिरम् ॥ अथ प्रोक्ता मयापर्णा कैलासं याहि सांप्रत-
म् ॥१७॥ पूर्णास्ते दिवसा जाताः पूर्णं ते वाञ्छितं प्रिये ॥ इत्युक्त्वा वृषमारुह्य तया सह गणैस्तदा
॥ १८ ॥ ज्ञात्वा चा[1]नुशयं तस्या यातः कैलासमात्मनः ॥ अथ प्रासूत नवमे संपूर्णे मासि शैलजा
॥ १९ ॥ विनायकस्वरूपं सा ददर्श यत्पुरेक्षितम् ॥ रक्ताम्बरं चतुर्बाहुं नानालंकारशोभितम् ॥ २० ॥
अष्टशक्तिधरं ज्ञानशक्तियुक्तं गुणाद्भुतम् ॥ सिद्धिबुद्धियुतं नित्यं सायुधं सिंहवाहनम् ॥ २१ ॥ स्मर-
न्ती तेन यत्प्रोक्तं पुरोवाच मुदाम्बिका ॥ ॥अम्बिकोवाच ॥ धन्यास्मि कृतकृत्यास्मि सफलो मे भवो
यतः ॥ २२ ॥ अव्यक्तमगुणं श्रेष्ठं मनसो वेगवत्तरम् ॥ अह्रस्वमतिह्रस्वं च स्थूलमस्थूलमेव च ॥२३ ॥
न[2]ं च वाय्वग्निराकाशमनापोऽपृथिवीति च ॥ यदामनन्ति वेदान्ताः परब्रह्म सनातनम् ॥ २४ ॥ अना-

१ 'तु चाशयं' इति पाठः । २ 'न वाय्वनन्यनाकाशं' इति पाठः ।

द्यनन्तमाकाररहितं वागगोचरम् ॥ यतश्चराचरमिदमुत्पत्तिस्थितिनाशवत् ॥ २५ ॥ तर्कितुं मनसा शक्यं निर्देष्टुं वा न यत्क्षमम् ॥ पुण्यस्यातिशयाद्दृष्टं प्रत्यक्षं मूर्तिमन्मया ॥२६॥ ॥ शिव उवाच ॥ इत्युक्त्वा परमात्मानमालिलिङ्गाम्बिका मुदा ॥ आनन्दपूर्णहृदया देहभावं न वेद सा ॥२७॥ वक्तिस्म परमात्मा तामानन्दनदमज्जतीम् ॥ ॥ विनायक उवाच ॥ उक्तमासीत्पुरा मातरवतीर्णस्तवोदरे ॥ २८ ॥ दुष्टानां हि विनाशाय तव शुश्रूषणाय च ॥ भुवो भारावताराय साधूनां पालनाय च ॥ २९ ॥ ॥ शिव उवाच ॥ इत्युक्त्वान्तर्दधे देवः स्नेहात्सा पुनरैक्षत ॥ पश्यति स्म तदा रूपं निःशिरस्कं नराकृति ॥३०॥ शुशोच दीनवदना पार्वती भृशदुःखिता ॥ ॥ पार्वत्युवाच ॥ केन मेऽपहृतो बालः स्थापयित्वा विमस्तकः ॥ ३१ ॥ उपेतोऽभूच्छिशुत्वं मे चतुर्बाहुर्विनायकः ॥ इदानीमेव कुत्रासौ त्यक्त्वा मां निर्गतः शिव ॥ ३२ ॥ अयं स्वप्नो नु माया वा भ्रान्तिर्वा मोहनं न वा ॥ हा देव हा शिव स्वामिन्हा मातर्हा पितः कथम् ॥ ३३ ॥ अभव्या हतभाग्याहं बालकेन कृताधुना ॥ विनायकेन देवेन किमुक्तं किं कृतं मम ॥ ३४ ॥ किमर्थं मोचिता चाहं सिन्दूरात्तेन लीलया ॥ कथं चादर्शयत्स्वात्मरूपं मां दुःखहेतवे ॥

॥ ३५ ॥ शिव उवाच ॥ श्रुत्वा शोकमहं यातो रुदन्तीं स्कन्द विह्वलः॥ वृत्तान्तः कथितोऽशेषः पार्वत्या शोकखिन्नया ॥ ३६ ॥ अङ्के तं बालकं कृत्वाऽभवं शोकातुरोऽप्यहम् ॥ अथोचे बुद्धिमान्नन्दी खल्वरिष्टमभूदिदम् ॥ ३७ ॥ सर्वेषां शिव देवानां दर्शनीयं मतं मम ॥ अनुमोद्य मया वाक्यं यदुक्तं तेन नन्दिना ॥ ३८ ॥ स एव प्रेषितः सर्वान्देवानाह्वयितुं तदा ॥ यातः शीघ्रतरं नन्दी पश्यति स्मामरावतीम् ॥ ३९ ॥ ददर्शेन्द्रसभामध्ये यक्षगन्धर्वसेवितम् ॥ सर्वदेवैः पूज्यमानमाब्दिके सुमहोत्सवे ॥४०॥ नत्वा तानखिलान्देवानाचख्यौ नन्दिकेश्वरः ॥ ॥ नन्दिकेश्वर उवाच ॥ अद्याद्भुतं समभवद्दुश्चिह्नं शंकरालये ॥ ४१ ॥ अभवत्सुन्दरः पुत्रो दाक्षायण्यां विमस्तकः ॥ अङ्के तं शिशुमादाय शोचनं कुरुते हरः ॥ ४२ ॥ मुमूर्च्छ शोकदुःखेन गिरिशः सापि पार्वती ॥ चलन्तु शीघ्रं सर्वेपि तस्य बोद्धुं शिवालयम् ॥ ४३ ॥ इदमेव मयाख्यातं ममागमनकारणम् ॥ ॥शिव उवाच ॥ इतीन्द्रो वचनं श्रुत्वा रुरोहैरावतं गजम् ॥ ४४ ॥ कैलासमागतो वेगान्नन्दिना सह वृत्रहा ॥ स्वं स्वं वाहनमारूढा देवास्तमनु चागताः ॥४५॥ दृष्ट्वा देवानहं सर्वानासने संन्यवेशयम् ॥ उवाचेन्द्रस्ततः पश्चादाहूय कमलासनम्

॥ ४६ ॥ ॥ इन्द्र उवाच ॥ अत्रानय शिशुं ब्रह्मन्पार्वत्या गृहमध्यतः ॥ द्रक्ष्यन्ति मीलिता देवा वदि-
ष्यन्ति यथामति ॥ ४७ ॥ ॥ शिव उवाच ॥ आनीय बालकं ब्रह्मा स्थापयत्पुरतोऽखिलान् ॥ दृष्ट्वैव
केचिदवदंस्त्याज्योऽयं सागरेऽर्भकः ॥४८॥ सर्वेषां शृण्वतां ब्रह्मा तमुवाच विमस्तकम् ॥ ॥ ब्रह्मोवाच ॥
वदस्व किमिदं रूपं मूर्ध्ना हीनं धृतं त्वया ॥ ४९ ॥ अनादिर्योऽस्य जगतः कर्ता पातापहारकः ॥
अनेकरूपोऽरूपो यः स एव त्वं मतो मम ॥५०॥ आनन्दयाखिलान्देवानुक्त्वा किंचिच्छिशोऽधुना ॥ ॥
शिव उवाच ॥ इत्युक्तवन्तं ब्रह्माणं हरिरूचे स्फुटं वचः ॥ ५१ ॥ शिशुर्निर्मस्तको ब्रह्मन्वद कुत्रापि
वीक्षितः ॥ अनादृत्य हरेर्वाक्यं पुनरूचे पितामहः ॥५२॥ ॥ ब्रह्मोवाच ॥ अयमेवाखिलं वेत्ति तत्त्वमस्य
न विद्महे ॥ अज्ञातं यन्न ते क्वापि दृश्यते न वदन्ति च ॥५३॥ ॥ शिव उवाच ॥ इति श्रुत्वाऽवदद्देवः
शिवरूपी विनायकः ॥ ॥ विनायक उवाच ॥ पुराराधि त्वया ब्रह्मन् सृष्टिसामर्थ्यमिच्छता ॥५४॥ सोऽहं
पुनस्त्वया दृष्टोऽवतीर्णो गिरिजोदरे ॥ शुश्रूषणाय पार्वत्या नाशाय सिन्दुरस्य च ॥५५॥ देवद्विजगवां
पाता भविष्याम्यधुना द्विज ॥ ॥ शिव उवाच ॥ संवादमुभयोः श्रुत्वा प्रोवाच भारतीपतिः ॥५६॥ ॥

गुरुरुवाच ॥ अवतारो यदि धृतः साधुत्राणाय भो प्रभो ॥ प्रकाशयाशु वदनं सर्वेषां शोकनाशनम्
॥ ५७ ॥ नयस्व सर्वदेवानामानन्दं हृदयं प्रभो ॥ ॥ शिव उवाच ॥ प्रत्युवाच गुरुं पुत्रः पार्वत्या
हीनमस्तकः ॥ ५८ ॥ ॥ शिशुरुवाच ॥ महेशाख्येन राज्ञा ते प्रणतौ चरणौ यदा ॥ तदाशीर्या त्वया
दत्ता तस्मै राज्ञे गुरो मुदा ॥ ५९ ॥ गजयोनौ जनिर्मुक्तिः शिवहस्तादुदीरिता ॥ तत्सर्वमभवत्तस्य
विद्यते चारुमस्तकः ॥६०॥ पूज्यमानः शिवेनास्ते शुण्डादण्डसुशोभनः ॥ अवतारकरोऽसौ मे गुरोस्मि-
न्भविता सुखम् ॥ ६१ ॥ शिव उवाच ॥ आश्चर्यपूर्णहृदयो गुरुरूचे पुनः शिशुम् ॥ ॥ गुरुरुवाच ॥
भगवन्विश्वरूपोऽसि त्रिकालज्ञोऽखिलेश्वरः॥ ६२ ॥ मया यदुदितं तस्मै त्वया ज्ञातं यतः प्रभो ॥ अह-
मीश स्वरूपं ते परिच्छेत्तुं न च क्षमः ॥ ६३ ॥ ॥ शिव उवाच ॥ श्रुत्वैवं ब्रह्मणः पुत्रो नारदस्तमथा-
ब्रवीत् ॥ ॥ नारद उवाच ॥ अहमेनं च पृच्छामि तूष्णीं भव गुरो क्षणम् ॥ ६४ ॥ इत्युक्त्वा गुरुमुच्चैः
स पप्रच्छ नारदः शिशुम् ॥ एवमेवावतीर्णोऽसि हीनमूर्धा कथं विभो ॥ ६५ ॥ अथवा बालरूपस्य
छिन्नं ते केनचिच्छिरः ॥ एतन्मे संशयं छिन्धि कृपया परमेश्वर ॥ ६६ ॥ ॥ शिव उवाच ॥ निपीय

नारदीं वाणीमुवाच शिशुरुच्चकैः ॥ ॥ शिशुरुवाच ॥ सिन्दूरः कोऽपि दैत्यो मे वायुरूपधरोऽच्छि-
नत् ॥ ६७ ॥ अष्टमे मासि संपूर्णे प्रविश्योमोदरे शिरः ॥ तमिदानीं हनिष्येऽहं गजास्यः सांप्रतं
द्विज ॥ ६८ ॥ ॥ शिव उवाच ॥ श्रुत्वैवं नारदः प्राह शिशुरूपिणमीश्वरम् ॥ ॥ नारद उवाच ॥
अकिंचिज्ज्ञा वयं देव योजनेऽस्य मुखस्य ते ॥ ६९ ॥ त्वमेव स्वप्रभावेण मुखमेतन्नियोजय ॥ ॥
शिव उवाच ॥ वदतीत्थं मुनौ यावत्तावत्स ददृशेऽखिलैः ॥ ७० ॥ सर्वावयवसंपूर्णो गजानन उमासुतः ॥
किरीटकुण्डलधरो युगबाहुः सुलोचनः ॥ ७१ ॥ वामदक्षिणभागे च सिद्धिबुद्धिविराजितः ॥ दृष्ट्वा
विनायकं स्कन्द तथाभूतं निजेच्छया ॥ ७२ ॥ हर्षेणोत्फुल्लनयना देवाः सर्वे तदाब्रुवन् ॥ गजानन
इति ख्यातो भवितायं जगत्त्रये ॥ ७३ ॥ आराध्यः सर्वकार्येषु सदेवासुरमानुषैः ॥ कामदः सिद्धिदा-
ता च महाप्रत्यूहनाशनः ॥ ७४ ॥ दृष्ट्वा शिशुं शुभं स्कन्द गजाननमुमाप्यहम् ॥ आनन्दतुः शुचं
त्यक्त्वा पूजयन्तौ विनायकम् ॥ ७५ ॥ स्वभालचन्द्रदानेन भालचन्द्राभिधा मया ॥ कृता तस्य
प्रसन्नेन लम्बकर्णाय षण्मुख ॥ ७६ ॥ यतोऽनेन धृतं स्कन्द विकटं रूपमात्मनः ॥ कौतुकादुक्तवान्ब्र-

ह्मा पूजयित्वा विनायकम् ॥ ७७ ॥ नाम्ना लोकेष्वतः ख्यातो विकटोऽयं भविष्यति ॥ पार्वती च मुदा युक्ता आरार्तिक्यं न्यवेदयत् ॥ ७८ ॥ ततो देवाः सगन्धर्वाः स्वं स्वं धाममुपागताः ॥ एवं भाद्रचतुर्थ्यां सोऽवतीर्णोऽभूद्गजाननः ॥ ७९ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये गजाननावतारवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥ ॥ ॥ ॥ ॥

॥ श्रीशिव उवाच ॥ ज्ञात्वावतीर्णं देवेशं गजाननस्वरूपिणम् ॥ कौतुकात्सिन्दुरगृहमाययौ नारदो मुनिः ॥ १ ॥ प्रशशंसाथ सिन्दूरमुपविश्यासने मुनिः ॥ ॥ मुनिरुवाच ॥ भूलोकमण्डले वीरो नेक्षितस्त्वादृशो मया ॥ २ ॥ आयासेन विना दैत्य ब्रह्मा तुभ्यं वरान्ददौ ॥ ॥ शिव उवाच ॥ नारदीयं वचः श्रुत्वा सिन्दूरः प्राह तं मुनिम् ॥३॥ ॥ सिन्दूर उवाच ॥ किमर्थमागतो ब्रह्मन्वदस्वानुग्रहं कुरु ॥ अपूर्वश्चैव वृत्तान्तो वक्तव्यो मम पृच्छतः ॥ ४ ॥ ॥ नारद उवाच ॥ स्वेच्छयैवागतो दैत्य कापीच्छा नैव मेऽस्ति हि ॥ सिन्दूराहं प्रवक्ष्यामि वृत्तान्तं शृणु चाद्भुतम् ॥ ५ ॥ शंकरस्याभवत्पुत्रश्चतुर्बाहुर्विमिस्तकः ॥ भूतं चैव भविष्यं च वर्तमानं च वक्ति सः ॥६॥ शुण्डादण्डः कियत्कालं स्थापितोऽभूच्छिवेन यः ॥

स एवागत्य संयुक्तः स्वतस्तन्मुखतां गतः ॥ ७ ॥ न जाने घोररूपोऽसाववतीर्णः कथं विभुः ॥ ॥
शिव उवाच ॥ श्रुत्वा तु ब्रह्मणःपुत्रवाचं वज्रस्वरूपिणीम् ॥ ८ ॥ सिन्दूरो न्यपतद्भूमौ वज्राहत इवा-
चलः ॥ उवाच नारदं कोपात्पुरुषं तं प्रदर्शय ॥ ९ ॥ स एव मम मृत्युः स्यात्स्वर्वाण्या कथितः पुरा ॥
शस्त्रास्त्रैर्बलवीर्याभ्यां हनिष्येऽहं क्षणार्धतः ॥ १० ॥ नोचेत्त्वां पीडयिष्यामि ब्रह्मपुत्र न संशयः ॥ ॥
नारद उवाच ॥ उपकारस्तवाज्ञायि ब्रह्मलब्धवरः पुरा ॥ ११ ॥ तमेव वेष्टितुं यातो बाहुभ्यां त्वं यदा
खल ॥ ॥ शिव उवाच ॥ इत्युक्त्वाऽन्तर्हितो यातः पार्वतीमवदन्मुनिः ॥ १२ ॥ ॥ नारद उवाच ॥
मातस्ते बालकं हन्तुं सिन्दूर इह यास्यति ॥ ॥ शिव उवाच ॥ इत्युक्त्वा सत्यलोकं स जगाम कौतुकी
मुनिः ॥ मुनौ यातेऽथ सिन्दूरः कोपेनाकुलितो बहु ॥ १३ ॥ उड्डानेन तु संत्रास्य खभूपातालवासिनः
॥ १४ ॥ वायुवेगेन कैलासं गर्जन्मेघ इवापरः ॥ तावद्ययौ स सिन्दूरस्ततो यातो मुनिर्यदा ॥ १५ ॥
उवाचोच्चैर्वचः क्रूरमेहि शत्रो बहिः क्षणम् ॥ अत्तुं त्वामहमायातो मृगेन्द्रः करिणं यथा ॥ १६ ॥ मदग्रे
को नु युद्धाय समर्थः स्याज्जगत्त्रये ॥ गजानन इति श्रुत्वाऽभिययौ सिन्दुरं रयात् ॥ १७ ॥ आयु-

धानि च चत्वारि गृहीत्वा दोश्चतुष्टये॥ जगर्ज गर्जयामास स्वः पातालं दिशो दश ॥१८॥ उवाच सिन्दुरं कोपाद्वल्गासि त्वं कथं खल ॥ ॥ गजानन उवाच॥ यस्यास्ति पौरुषं दैत्य वैल्गनं न करोति सः ॥१९॥ शक्तिश्चेद्दर्शयेदानीं मर्दयिष्यामि ते न चेत्॥ विलेपनं ततः कुर्यांशुण्डादण्डे निजेऽधुना ॥२०॥ ॥ शिव उवाच॥ गजाननवचः श्रुत्वा सिन्दूरः प्राह तं रुषा॥ ॥ सिन्दूर उवाच॥ गच्छ बालक पार्वत्याः स्तनात्पिब[2] पयो लघो ॥२१॥ नेशो योद्धुं मयासि त्वं क्रीडस्व गिरिजाङ्गणे ॥ ॥ शिव उवाच ॥ प्रत्यूचे गर्वयुक्तं तं सिन्दूरं स गजाननः॥२२॥ ॥गजानन उवाच॥ लघीयान्हि यथा दीपो नाशयत्यखिलं तमः॥ अङ्कुशेनापि हन्यन्ते मदोन्मत्ता यथा गजाः ॥ २३ ॥ हनिष्यामि तथैव त्वां मम पश्य कुतूहलम् ॥ शिव उवाच ॥ उक्त्वैवं सिन्दुरं दध्रे विराड्रूपं गजाननः ॥ २४ ॥ अङ्घ्रिणापस्पृशन्मूर्धा सहस्रेण च रोदसी ॥ यदास्य दोर्भ्यामूरुभ्यां पादेभ्यः प्रतिजज्ञिरे ॥ २५ ॥ द्विजक्षत्रियविट्शूद्राश्चक्षुषो हृदयादपि ॥ सूर्याचन्द्रमसौ जातौ प्राणवायुः श्रुतेरभूत् ॥ २६ ॥ अग्निरास्यादन्तरिक्षं यस्य नाभेरजायत ॥

१ बलाख्यानकरो न सः । २ स्तनं पिब लघोऽधुना ।

द्यौश्चाप्यस्याभवच्छीर्ष्णः पद्भ्यां भूमिर्दिशः श्रुतेः ॥२७॥ वनानि सप्त च द्वीपा पर्वताः सप्त सागराः ॥ सप्तर्षयश्च पातालान्यव्ययान्येकविंशतिः ॥ २८ ॥ कतिधा येन सृष्टानि रक्षितानि हृतानि च ॥ दृष्ट्वा क्रूरं क्रूरदेहं जघान सिन्दुरो रयात् ॥ २९ ॥ पाणिभ्यां मर्दयित्वा तं सिन्दूरं मदगर्वितम् ॥ गतासुं पङ्कतां नीत्वा मस्तके विभुरालिपत् ॥३०॥ चन्दनेनानुलिप्ताङ्गः स बभौ चारुगन्धतः ॥ हतेऽस्मिन्सिन्दुरे दैत्ये सर्वे देवास्तमाययुः ॥ ३१ ॥ ब्रह्मा विष्णुश्चाहमपि तदायाताः षडानन ॥ गजाननं महाकायं तदा संपूज्य भक्तितः ॥ ३२ ॥ शृण्वतां सर्वदेवानां स्तवराजः कृतो मया ॥ ब्रह्माथ पूजयामास सर्वतीर्थसमुद्भवैः ॥ ३३ ॥ कमण्डलुस्थितैर्वार्भिरर्घ्यपाद्यादिभिः क्रमात् ॥ वरुणोऽपूजयद्देवं द्विरदाननमादरात् ॥ ३४ ॥ पूजान्ते दत्तवांस्तस्मै पाशं पाशधरो मुदा ॥ अर्णसां निधिरप्यस्मै संपूज्य कमलं ददौ ॥ ३५ ॥ ततो मया प्रसन्नेन त्रिशूलोऽस्मै समर्पितः ॥ अपूपुजंस्तथा देवाः क्रमशस्ते गजाननम् ॥ ३६ ॥ जातीमन्दारकह्लारशतपत्रविगुम्फिताम् ॥ अददुः कुञ्जरास्याय मालां सुरभिगन्धिनीम् ॥ ३७ ॥ ततो वाद्यानि गानानि नृत्यानि कौतुकानि च ॥ गन्धर्वाप्सरसो देवाश्चक्रुस्तस्य पुरो मुहुः

॥ ३८ ॥ आनन्दार्णवमग्नेषु देवर्षिषु शिशोर्यदा ॥ तदैवान्तर्हितो जातः स्वेच्छयासौ गजाननः॥३९॥
यदिदं श्रावयेत्स्कन्द प्रसूतिसमये शुभम् ॥ प्रसूतिः सुखतोऽस्मात्स्याद्बालको बुद्धिमान्भवेत् ॥४०॥ यात्रा-
काले स्मरेद्यस्तु विजयस्तस्य जायते ॥ शृणुयाच्छ्रावयेद्यस्तु सर्वान्कामानवाप्नुयात्॥ ४१ ॥ विनायकस्य
तार्तीयं मयावतरणं शिशोः ॥ भक्तितो यत्त्वया पृष्टं कथितं तत्षडानन ॥ ४२ ॥ इति श्रीस्कन्दपुराणे
विनायकमाहात्म्ये शिवस्कन्दसंवादे सिन्दुरवधो नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ ॥

॥ शिव उवाच ॥ विघ्नराजावतारस्य पुरावृत्तं कथानकम् ॥ सर्वपापहरं स्कन्द वक्ष्यामि शृणु सांप्रतम्
॥ १ ॥ हिमवत्पर्वते रम्ये सौभरिर्मुनिपुङ्गवः ॥ वेदशास्त्रार्थसंपन्नः पञ्चयज्ञरतः सदा ॥ २ ॥ कदाचि-
त्कन्दमूलाशी कदाचिदुञ्छवृत्तिकृत् ॥ आत्मवान् ज्ञानसंपन्नश्चराचरहितार्थकृत् ॥ ३ ॥ समहेमाश्मलो-
ष्टश्च यः समः सर्वजन्तुषु ॥ कृत्वा पर्णकुटीमास्ते मनोमय्या स्वभार्यया ॥ ४ ॥ कदाचित्क्रौञ्चगन्धर्वो
गते स्नानाय सौभरौ ॥ तदीयामागतः पर्णकुटीं दुष्टमनाः खलः ॥ ५ ॥ ददर्श सौभरेर्भार्यां सुन्दरीं
तां मनोमयीम् ॥ गृहार्चनरतां दिव्यकान्तिमेकाकिनीं तदा ॥ ६ ॥ सागतं क्रूरया बुद्ध्या पुरुषं काम-

मोहितम् ॥ दृष्ट्वैव वेपथुं प्राप्ता मूर्च्छया पतिता भुवि ॥ ७ ॥ वृकोऽजामिव तां दध्रे करे क्रौञ्चो
मनोमयीम् ॥ शुशोच दीनया वाचा रुदन्ती दुःखपीडिता ॥ ८ ॥ ॥ मनोमय्युवाच ॥ कुत्र यातोऽसि
भो भर्तस्त्यक्त्वा मां गहने वने ॥ दुष्टव्याघ्रगणाकीर्णे झिल्लिकागणनादिते ॥ ९ ॥ यमदूत इवायं मे
कर्षते दुष्टया धिया ॥ को नु मां मोचयेदस्मादनाथामेकतः स्थिताम् ॥ १० ॥ हस्तं मोचय मे दुष्ट
शपिष्ये त्वां नचेद्रुषा ॥ ॥ शिव उवाच ॥ एवं वदन्त्यामायातो मनोमय्यां स सौभरिः ॥ ११ ॥
दृष्ट्वा तं क्रौञ्चगन्धर्वं पृच्छति स्म रुषा मुनिः ॥ ॥ मुनिरुवाच ॥ कोऽसि त्वं कर्षसे कस्मात्कुतः
कस्य त्वमागतः ॥ १२ ॥ विनापराधमेनां त्वं कृष्टवानसि दुर्मते ॥ भव त्वमाखुरूपेण सर्वदा कर्षको
भुवः ॥ १३ ॥ ॥ शिव उवाच ॥ इति शापं समाकर्ण्य सौभरेर्मुखतो मुनेः ॥ क्रौञ्चः प्रसादयामास
सौभरिं दुःखितो भृशम् ॥ १४ ॥ ॥ क्रौञ्च उवाच ॥ मोहादभूदिदं कर्म न मत्तो बुद्धिपूर्वकम् ॥
मह्यमुच्छापदानाय प्रसीद त्वं दयानिधे ॥ १५ ॥ ॥ शिव उवाच ॥ सौभरिस्तद्वचः श्रुत्वा ददावु-
च्छापमुत्तमम् ॥ ॥ मुनिरुवाच ॥ विनायकः पार्श्वगृहेऽवतरिष्यति सांप्रतम् ॥ १६ ॥ विघ्नासुरवि-

नाशाय तस्य संनिधिमेष्यसि ॥ ॥ शिव उवाच ॥ एवं यातः स गन्धर्वः श्रुत्वोच्छापं मुनेर्मुखात्
॥ १७ ॥ सौभरिर्भार्यया साकं मुदा युक्तोऽभवत्तदा ॥ स्वाध्यायादीनि नित्यानि कर्माणि निरवर्तयत्
॥१८॥ ॥ स्कन्द उवाच ॥ अवतारः कथमभूदाखुतां स कथं गतः ॥ उभयोश्च कथं योग एतन्मे वद
शंकर ॥ १९ ॥ ॥ शिव उवाच ॥ अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् ॥ यच्छ्रुत्वा मुच्यते जन्तुः
पापेभ्यो नात्र संशयः ॥ २० ॥ कदाचिदमरावत्यां सुखासीनो यदा हरिः ॥ तदा तं मुनिमुख्योऽसौ
नारदः स्वेच्छयागतः ॥ २१ ॥ प्रणनाम मुनिं भक्त्या उपवेश्यासने हरिः ॥ अनेकैरुपचारैः सोऽपूपु-
जद्ब्रह्मणः सुतम् ॥ २२ ॥ इन्द्रस्य भक्तिभावेन संतुष्टो नारदोऽब्रवीत् ॥ ॥ नारद उवाच ॥ भूतले
यन्मया दृष्टमपूर्वं कौतुकं हरे ॥ २३ ॥ तव चैव च देवानां हिताय शृणु तद्वदे ॥ हिमवद्विन्ध्ययोर्मध्ये
आसीद्धैमवती पुरी ॥ २४ ॥ तस्यामधिवसन्राजा नाम्ना ख्यातोऽभिनन्दनः ॥ अभवत्स श्रिया मत्त-
श्चक्रे यागमहोत्सवम् ॥ २५ ॥ ब्राह्मणांस्तर्जयन्नाह विनेन्द्रं कुरुताध्वरम् ॥ पुरादस्माद्बहिः कुर्यां
वापयित्वा शिरो न चेत् ॥ २६ ॥ दुष्टात्प्रभोः खलान्मत्ताद्भीतास्ते ऋत्विजोऽयजन् ॥ अनिष्ट्वैवाहुतीरद्य

प्रथमेऽहनि वृत्रहन् ॥ २७ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा नारदस्तत्र हरिमन्तर्दधे क्षणात् ॥
नारदेऽन्तर्हिते शक्रो रक्तनेत्रो बभूव ह ॥ २८ ॥ रुषानलेन संतप्तो दावेनेव महाचलः ॥ अवदत्क्रूरया
वाचा जिघत्सन्निव रोदसी ॥ २९ ॥ ॥ शक्र उवाच ॥ अग्नेर्ममापि सोमस्य भागश्चास्ति प्रजापतेः ॥
आदौ स्मार्ते तथा श्रौते कर्मणीह शुभाशुभे ॥ ३० ॥ व्यङ्गं यत्क्रियते काम्यं न फलं प्राप्यते ततः ॥
दत्तामप्याहुतिं देवा नार्हन्ति मद्विना क्वचित् ॥ ३१ ॥ विध्वंसयिष्ये तं यागं राज्ञो दुष्टस्य तस्य तम् ॥
शिव उवाच ॥ उक्त्वैवमाह्वयत्स्कन्द शक्रस्तं कालरूपिणम् ॥३२॥ य इदं मायया मोह्य कलयत्यखिलं
जगत् ॥ आगतस्तत्क्षणात्सोऽपि श्रुत्वाह्वानं मरुत्वतः ॥ ३३ ॥ दृष्ट्वा तमागतं शक्र इत्थमाज्ञापयत्क्रुधा ॥
॥ इन्द्र उवाच ॥ मद्विना यजतोऽन्धस्य श्रिया राज्ञः सुदुर्मतेः ॥ ३४ ॥ अनेकानि च रूपाणि धृत्वा
त्रैलोक्यपीडकः ॥ समाधानाय मच्चित्तवृत्तेस्त्वं भव सांप्रतम् ॥ ३५ ॥ भूलोकं विघ्नरूपेण गच्छ नाशय
तां यजिम् ॥ ॥ शिव उवाच ॥ उक्तं यत्पुरुहूतेन स्वीकृत्य तत्क्षणाद्ययौ ॥ ३६ ॥ विद्युद्रूपेण घोरेण स
कालपुरुषो भुवम् ॥ गर्जनादखिलाँल्लोकान्कम्पयामास वेगवान् ॥ ३७ ॥ ध्वंसयामास दुष्टस्य तस्य

राज्ञो यजिं क्षणात् ॥ बभक्ष हविषो भारांस्ताडयामास ऋत्विजः ॥ ३८ ॥ अदहद्यज्ञपात्राणि कुण्डं च प्रत्यपूरयत् ॥ बभञ्ज मण्डपं सर्वं क्षणाद्यातः स्थलान्तरम् ॥ ३९ ॥ तत्रापि यजनं दृष्ट्वा तद्बभञ्ज बलेन सः ॥ यत्र यत्र ददर्शासौ श्रौतं वा स्मार्तकर्म च ॥४०॥ तत्र तत्रापि गत्वा तद्भनक्ति स्म निमेषतः ॥ एवं तेन कृतो लोकः कर्महीनो महीतले ॥ ४१ ॥ ब्राह्मणाः पीडिताः सर्वे लक्ष्यालक्ष्यस्वरूपिणा ॥ सस्मरुस्त्रिजगन्नाथमृषयो दुःखमुक्तये ॥ ४२ ॥ ॥ मुनय ऊचुः ॥ हृद्गतः सर्वजन्तूनामीक्षकः सर्वकर्मणाम् ॥ जनकः सर्वभूतानां रक्षको हारकस्तथा ॥ ४३ ॥ श्वसितं ते चतुर्वेदाः साङ्गोपाङ्गा जनार्दन ॥ पाहि नः कालरूपेण विघ्नेन पीडितान्भृशम् ॥ ४४ ॥ शक्तिहीनाननाथांश्च दीनांस्ते शरणागतान् ॥ नित्यानित्यक्रियाहीनान्मलिनानाधिभोगिनः ॥ ४५ ॥ ॥ शिव उवाच ॥ इत्याकर्ण्य मुनीन्द्राणां वचनं स विनायकः ॥ कृपया विश्वरूपो यो व्यापकः प्रभुरीश्वरः ॥ ४६ ॥ ऊचे तान्स्निग्धया वाचा मा भयं कुरुतर्षयः ॥ ॥ विनायक उवाच ॥ आविर्भविष्ये सदने वरेण्यस्य महीपतेः ॥ ४७ ॥ त्रैलोक्यरक्षणार्थाय विघ्नस्यास्य प्रशान्तये ॥ पालनाय स्वभक्तानां साधुत्राणाय भूसुराः ॥४८॥ ॥ शिव

उवाच॥इत्युक्त्वा पुष्पिंकागर्भं प्रविवेश तदैव सः ॥ गतेऽथ नवमे मासि प्रासूत पुष्पिका शिशुम्॥४९॥
चतुर्बाहुमिभास्यं च दन्तुरं सुन्दरेक्षणम्॥ आयुधानि च चत्वारि बिभ्रतं तेजसान्वितम् ॥५०॥ दृष्ट्वा सा
क्रन्दनं चक्रेऽरिष्टमेतत्किमागतम् ॥ श्रुत्वा चाक्रन्दनं तस्या वरेण्यः सगणो ययौ ॥ ५१ ॥ ददर्श बालकं
सोऽपि विस्मितः सह तैर्गणैः ॥ उवाचानुचरान्राजा त्यजतैनं सरोवरे ॥ ५२ ॥ शिशुमादाय ते याताः
पार्श्वस्यैवाश्रमे शुभे ॥ कासारे तं शिशुं त्यक्त्वा ययुः सर्वे निजं पुरम् ॥ ५३ ॥ अपरस्मिन्दिने पार्श्व-
मुनिः स्नानाय चागतः ॥ तदैव ददृशे तेन बालकोऽद्भुतदर्शनः ॥ ५४ ॥ आश्चर्यमकरोत्तत्र भयभी-
तस्तथाभवत् ॥ आश्रमे केन मे त्यक्तमरिष्टं सुखदायिनि ॥ ५५ ॥ तपसो नु फलं दातुमीदृशीं धृतवां-
स्तनुम् ॥ रक्षितुं सर्वलोकानां परमात्मा निजेच्छया ॥ ५६ ॥ सुन्दरो बालकः केन त्यक्तोऽयमीदृशो
बहिः ॥ नीत्वा स्वमाश्रमं चैनं पालयिष्ये प्रयत्नतः ॥५७॥ इत्युक्त्वा जगृहे बालमालिलिङ्ग मुदा मुनिः ॥
तमानीतं मुनेः पत्नी ददर्श दीपवत्सला ॥ ५८ ॥ उवाच निजभर्तारं सुप्रसन्नाननाम्बुजा ॥ ॥ दीपवत्स-

१ अन्यपुस्तके पुण्यका इत्यस्या नाम ।

लोवाच ॥ किमानीतमिह स्वामिन् भृशमाश्चर्यकारकम् ॥५९॥ इदं वैनायकं रूपं मम भाति द्विजर्षभ ॥ इदमेव श्रियः स्थानमिदमेव तपःफलम् ॥६०॥ इदमेव परं ब्रह्म योगिध्येयं सनातनम् ॥ इदमेव परं तेज आदित्ये यदधिष्ठितम् ॥ ६१ ॥ इदमेव हि वेदान्ता नेतिनेति प्रचक्षते ॥ ॥ शिव उवाच ॥ इत्युक्त्वा हर्षसंपन्ना भर्तुरादाय बालकम् ॥ ६२ ॥ स्तनपानं ददौ तस्मै ततः सा दीपवत्सला ॥ द्वितीयाचन्द्रवद्बालो वृद्धिं यातो दिनेदिने ॥६३॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये स्कन्दशंकरसंवादे विघ्नराजावतारवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ॥ ॥

॥ ॥ श्रीशिव उवाच ॥ यथा विनायको देवोऽवतारं धृतवान् प्रिय ॥ तदुक्तमधुना वक्ष्ये गन्धर्वचरितं तव ॥ १ ॥ क्रौञ्चः सौभरिशापेन तदैवाखुत्वमागतः ॥ महाभीमतनुः पार्श्वमुनेराश्रममाविशत् ॥ २ ॥ दिवारात्रौ महावेगस्तमाश्रममुपाद्रवत् ॥ अग्निकुण्डानि पात्राणि पुस्तकान्यखिलानि च ॥ ३ ॥ अभिनद्दृढदंष्ट्राभ्यां चखान पर्वतानपि ॥ चखाद वृक्षपुष्पाणि कुड्यानि च न्यपातयत् ॥ ४ ॥ कदाचिदवदत्पार्श्वमुनिश्चिन्तातुरो भृशम् ॥ ॥ मुनिरुवाच ॥ मूषकोऽयं कथं नश्येन्मम दुःखप्रदायकः

॥ ५ ॥ जन्मावधि मया दुःखं नानुभूतमिहाश्रमे ॥ न कृतं च तथा कर्म येन दुःखं भवेन्मम ॥ ६ ॥
॥ ॥ शिव उवाच ॥ एवं वाक्यानि शुश्राव स बालः प्राह तं मुनिम् ॥ ॥ विनायक उवाच ॥
अहमस्य विनाशाय यतिष्ये मुनिसत्तम ॥ ७ ॥ एकेन मुष्टिघातेन कर्षयिष्ये न संशयः ॥ ॥ शिव
उवाच ॥ इत्युक्त्वा तं मुनिं पार्श्वं तदैव पुष्पकासुतः ॥ ८ ॥ तत्याज पाशमाकृष्टुं मूषकं तं विनायकः ॥
स प्रापन्मौषिकं स्थानं भ्रमित्वा ककुभो दश ॥ ९ ॥ वेष्टयित्वा गलं तस्य विनायकसमीपतः ॥
आनयामास तं शीघ्रं श्वसन्तं स ददर्श ह ॥ १० ॥ विनायकस्य पदयोर्धृत्वा मस्तकमब्रवीत् ॥ ॥
मूषक उवाच ॥ सौभरिर्मेऽशपद्दृष्ट्वा मयाकृष्टां स्त्रियं बलात् ॥ ११ ॥ मूषको भवितासि त्वं मम शापा-
त्खलाधम ॥ उच्छापं च ददौ मह्यं प्रार्थितः स कृपाम्बुधिः ॥ १२ ॥ सान्निध्यं भविता तेऽस्ति गजा-
स्यस्य जगद्गुरोः ॥ एवमुच्छापमाकर्ण्य देवाहं मुमुदे तदा ॥ १३ ॥ तस्यर्षेः सफल वाक्यमद्य जातं
विनायक ॥ वाहनत्वं त्वया देयं सेवायै तव मे विभो ॥१४॥ ॥ शिव उवाच ॥ इति श्रुत्वा गिरं तस्य
गन्धर्वस्याखुरूपिणः ॥ तमारुरोह भगवान्मुदा पाशधरस्तदा ॥ १५ ॥ दृष्ट्वा मूषकमाक्रान्तं बालेन

लीलया प्रिय ॥ आश्चर्यमकरोत्पार्श्वमुनिर्दुःखं जहौ तदा ॥ १६ ॥ उवाच मधुरं वाक्यं नत्वा बालं विनायकम् ॥ ॥ पार्श्व उवाच ॥ विचित्रलीला ते ज्ञाता प्रसादात्तव पाशभृत् ॥ १७ ॥ भूर्लोके न भुवर्लोके स्वर्लोके वा न ते समः ॥ इदानीं हि मया बुद्धं स्वरूपं व्यापकस्य ते ॥ १८ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा परमात्मानमालिलिङ्ग मुदा मुनिः ॥ उवाच परमात्मा तं मुनिं पार्श्वं हसन्मुदा ॥१९॥ ॥ ॥ विनायक उवाच ॥ विघ्नेनोपद्रुता लोका वर्तन्ते मुनिसत्तम ॥ अमुमाखुं समारुह्य हनिष्येऽहं भृशोद्धतम् ॥ २० ॥ हत्वाऽधर्मं च धर्मं च स्थापयिष्ये महामुने ॥ आनन्दयिष्ये त्रींल्लोकान्मुदा मूषकवाहनः ॥ २१ ॥ ॥ स्कन्द उवाच ॥ कथं विघ्नं महाघोरं बालरूपी न्यवारयत् ॥ वक्तुमर्हसि भर्गैतत्कौतुकान्मम पृच्छतः ॥ २२ ॥ ॥ शिव उवाच ॥ विघ्नभीत्या हि मुनयः केचिद्धाता विधिं प्रति ॥ प्रणेमुस्तुष्टुवुः सर्वे शंसन्विघ्नस्य चेष्टितम् ॥ २३ ॥ त्रैलोक्यं पीडितं तेन विघ्नेन सुबलीयसा ॥ उपायः कथ्यतां शीघ्रमस्य नाशाय भो विभो ॥ २४ ॥ अवदन्मुनिमुख्यांस्तान्ब्रह्मा यूयं सुरेश्वरम् ॥ यात तस्यैव वचसा कर्तव्यं तस्य नाशनम् ॥ २५ ॥ श्रुत्वैवं विमनीभूता ब्राह्मणा ब्रह्मणो गिरम् ॥

विमनस्कान्मुनीन्वीक्ष्य धाता तानब्रवीद्वचः॥ २६॥ ॥ब्रह्मोवाच॥आश्रमे मुनिमुख्यस्य यान्तु पार्श्वस्य भो द्विजाः ॥ तत्रावतीर्णो भगवानास्ते मूषकवाहनः ॥ २७ ॥ स विघ्नं तत्क्षणादेव वारयिष्यति वीर्यवान् ॥ श्रुत्वैवं मुमुदुर्विप्राः प्रणेमुः कमलासनम् ॥ २८ ॥ प्रतस्थुः क्षणमात्रेण ययुः पार्श्वगृहं मुदा ॥ मुनिना तेन ते दृष्ट्वा उपवेश्यासनेऽर्चिताः ॥ २९ ॥ उवाच सुप्रसन्नात्मा पार्श्वस्तान्मुनिपुङ्गवान् ॥ ॥ पार्श्व उवाच ॥ कुलं जन्म श्रुतं शास्त्रं सफलं मेऽद्य भो द्विजाः॥ ३० ॥ यद्दृष्टं भवतां वृन्दं पूर्वपुण्यस्य गौरवात् ॥ ॥ शिव उवाच ॥ एवं वदन्तं पार्श्वं स वसिष्ठो मुनिपुंगवः ॥ ३१ ॥ जगाद शृण्वतां तेषां मुनीनां भावितात्मनाम् ॥ ॥ वसिष्ठ उवाच ॥ विघ्नेन कालरूपेण पीडिता वयमुत्कटम् ॥ ३२ ॥ ब्रह्माणं शरणं यातास्तेनात्र प्रेषिता मुने ॥ परमात्मावतीर्णस्ते गृहे त्वद्भाग्यतः शुभात् ॥ ३३ ॥ दर्शनाय चतुर्बाहोरिभास्यस्य तवापि च ॥ अतो याता वयं सर्वे मीलित्वा पार्श्व ते गृहे ॥ ३४ ॥ इदानीं प्रार्थनीयोऽसौ परमात्माखिलैरपि ॥ ॥ शिव उवाच ॥ एवं वदत्सु विप्रेषु ययौ तत्र विनायकः ॥ ३५ ॥ स तानुवाच प्रीतात्मा सर्वज्ञः सुखदायकः ॥ आर्तानां पीडितानां वः किं विधेयं प्रयोजनम्

॥ ३६ ॥ अथोवाच मुनिश्रेष्ठो वसिष्ठस्तं विनायकम् ॥ ॥ वसिष्ठ उवाच ॥ विघ्नासुरात्कालरूपाद्भीतास्त्वां शरणं गताः ॥ ३७ ॥ माता त्राता पितासि त्वमस्माकं जगतामपि ॥ ब्रह्मलोकं पुरा यातास्तेनात्र प्रेषिता विभो ॥ ३८ ॥ दुःखदावाग्निना तप्तान् सिञ्चस्व करुणाम्बुना ॥ ॥ शिव उवाच ॥ प्रत्यूचे पाशपाणिस्तं वसिष्ठं वदतां वरम् ॥ ३९ ॥ ॥ पाशपाणिरुवाच ॥ इन्द्रेणेदं कृतं कर्म गर्वयुक्तेन चेतसा ॥ त्रैलोक्यं पीडितुं विघ्नः प्रेषितः कालरूपधृक् ॥ ४० ॥ विघ्नं दुःखकरं दुष्टं पीडकं सर्वदेहिनाम् ॥ ध्वंसकं सर्वयज्ञानां नाशकं सर्वकर्मणाम् ॥ ४१ ॥ इदानीं क्षणमात्रेण वारयिष्ये द्विजासुरम् ॥ ॥ शिव उवाच ॥ उक्त्वैवमाखुमारुह्य चतुर्बाहुरिभाननः ॥ ४२ ॥ कमलं परशुं पाशमङ्कुशं दधदद्भुतम् ॥ प्रतस्थे विघ्नमुद्दिश्य तं सर्वे मुनयोऽन्वयुः ॥ ४३ ॥ असुराराममाविश्य सर्वान्देवोऽब्रवीच्च तान् ॥ पश्यन्तु कौतुकं विप्रा विघ्नेनायुध्यतो मम ॥ ४४ ॥ इत्युक्त्वाङ्कुशमादाय विघ्नमानेतुमुज्जहौ ॥ अङ्कुशो वायुवेगेन विघ्नं यातः क्षणार्धतः ॥ ४५ ॥ वेष्टयित्वा गले तस्य आनिन्ये तं विनायकम् ॥ भीमदेहं करालास्यं जटिलं भीषणेक्षणम् ॥ ४६ ॥ लेलिहानं नभोदेशं विघ्नं घोरपराक्रमम् ॥ ददर्श मूषकारूढो गजास्यो

मुनिभिः सह ॥ ४७ ॥ अपूर्वपुरुषं यावत्पश्यति स्म विनायकः ॥ पक्षिरूपेण विघ्नोऽसौ तावद्भ्राम
खे भृशम् ॥ ४८ ॥ पक्षिभूतं निरिक्ष्यैनं दीप्तः क्रोधाग्निना तदा ॥ तत्याज कमलं हन्तुं पक्षिणं तं
गजाननः ॥ ४९ ॥ आगतं कमलं दृष्ट्वा विघ्नोऽभूदनलात्मकः ॥ प्रलयानलवल्लोकान्ददाह तीक्ष्णतेजसा
॥ ५० ॥ अग्निभूतं निरीक्ष्यैनं भीतांश्च मुनिपुङ्गवान् ॥ ववर्ष मेघरूपेण वर्षाभ्रमिव[1] तेजसा ॥ ५१ ॥
बभञ्ज मेघपटलं विघ्नो वायुस्वरूपधृक् ॥ तावत्स पर्वतो भूत्वा छादितं खलु भूतलम् ॥ ५२ ॥ पर्वती-
भूतमालोक्य विघ्नोऽसौ द्विरदाननम् ॥ वज्ररूपेण तं हन्तुं यततेस्म बलान्वितः ॥ ५३ ॥ विसृज्य
कुलिशीभूतं विघ्नं स पार्श्वनन्दनः ॥ शक्तिं निर्माय तं भेत्तुं यततिस्म मदोत्कटः ॥ ५४ ॥ विघ्नरूप-
धरं विघ्नं भुवनानि च वेगतः ॥ प्रससार सुखं[2] शक्तिः साशितुं तेन नोदिता ॥ ५५ ॥ स लक्ष्य
क्रूरशक्तिं तां कालरूपधरो[3]ऽभवत् ॥ अमन्यत्परमात्मानं चतुर्बाहुमिभाननम् ॥ ५६ ॥ हीनौजसं तथा-
त्मानं विघ्नः शान्तमनास्तदा ॥ तुष्टाव परमात्मानं निबद्धकरसंपुटः ॥ ५७ ॥ उवाच च मुदा देवं

१ मिव पाशभृदिति पाठः । २ मुखमिति पाठः । ३ रूपोऽभवत्पुनरिति पाठः ।

पाशपाणिं विनायकम् ॥ ॥ विघ्न उवाच ॥ क्षम्यतामपराधो मे विनायक दयानिधे ॥ ५८ ॥ अज्ञानाच्छक्तिगर्वाच्च पीडितं भुवनत्रयम् ॥ उत्पत्तिस्थितिसंहारकारिणानेकरूपिणा ॥ ५९ ॥ मोहादद्य कृतं युद्धं त्वया सार्धं जगत्पते ॥ गुणातीतो निराकारो ब्रह्मभूतो जगन्मयः ॥ ६० ॥ त्वमेव जगतां हेतू रक्ष मां शरणागतम् ॥ अद्यैवं मायया ऽदर्शि बहुरूपाणि ते मया ॥ ६१ ॥ इति विघ्नवचः श्रुत्वा जगौ तं स विनायकः ॥ ॥ विनायक उवाच ॥ आवेशो मे महानासीद्विघ्न नाशाय ते पुरा ॥ ६२ ॥ इदानीं रक्षणीयोऽसि यतस्त्वं शरणागतः ॥ कुरुष्व वचनं मेऽद्यप्रभृति त्वं मम प्रियः ॥ ६३ ॥ मन्नामस्मरणं यत्र पूजनं वापि भक्तितः ॥ स्तुतिर्वा प्रणतिर्यत्र तत्र स्थेयं न कर्हिचित् ॥ ६४ ॥ स्थेयं च नेदृशे यत्र कर्मादौ स्वेच्छया त्वया ॥ ॥ शिव उवाच ॥ इति श्रुत्वा वचस्तस्य प्रणतः प्राह तं पुनः ॥ ६५ ॥ ॥ विघ्न उवाच ॥ मन्नामपूर्वकं नाम तवास्मिन्जगतीतले ॥ प्राप्नोतु परमां ख्यातिं सर्वदुष्टनिवारकम् ॥ ६६ ॥ ॥ शिव उवाच ॥ पुनरप्याह तं विघ्नं प्रीतोसौ पार्श्वपुत्रकः ॥ त्वन्नामपूर्वकं नाम मम

१ मघवद्वाक्यतोऽदर्शि ।

लोके भविष्यति ॥ ६७ ॥ विघ्नराजेति च ख्यातिं सर्वसिद्धिप्रदं नृणाम् ॥ ॥ शिव उवाच ॥ ततः
शान्ततरो जातो विघ्नोसौ शान्तरूपधृक् ॥ ६८ ॥ संपूज्य विधिवद्भक्त्या विघ्नराजं सुरेश्वरम् ॥ तुष्टु-
वुर्मुनयश्चैनं देवदेवं मुदान्विताः ॥ ६९ ॥ वरेण्योपि च तच्छ्रुत्वा सहपुष्पिकयागतः ॥ आलिङ्ग्यापू-
जयद्विघ्नराजं तं परया मुदा ॥ ७० ॥ विघ्नराजः प्रसन्नात्मा वरांस्तस्मै ददौ बहु ॥ आज्ञया तस्य
देवस्य स ययौ निजपत्तनम् ॥ ७१ ॥ अवाकिरंस्तदा देवा युद्धं द्रष्टुमुपागताः ॥ नृत्यमप्सरसश्चक्रुर्ग-
न्धर्वा जगुरद्भुतम् ॥ ७२ ॥ अवादयन्त वाद्यानि केचिद्दिव्यानि षण्मुख ॥ आननन्दुस्त्रयो लोकाः स्वं
स्वं धाम उपाश्रिताः ॥७३॥ पश्यत्सु मुनिदेवेषु तत्रैवान्तर्हितो विभुः ॥ अन्तर्धानं गते विघ्नराजे तेषां
समीक्षताम् ॥ ७४ ॥ मुनयोऽथ ययुः सर्वे स्वंस्वमाश्रममुत्सवात् ॥ इति ते विघ्नराजाख्यश्चतुर्थः
कथितो मया ॥७५॥ अवतारः कार्तिकेय पञ्चमं शृणु सांप्रतम् ॥ मयूरेश इति ख्यातं धर्मार्थकाममो-
क्षदम् ॥७६॥ इति श्रीस्कन्दशिवसंवादे विनायकमा० विघ्नराजावतारवर्णनं नाम चतुर्दशोऽध्यायः ॥१४॥
॥ ॥ शिव उवाच ॥ कदाचिद्विश्वकर्तासौ तपसि स्कन्द संस्थितः ॥ ध्यानस्थितं निरीक्ष्यैनं शङ्को

दुष्टमनाः खलः ॥१॥ जहार वेदान्शास्त्राणि पुराणानि च षण्मुख ॥ प्रविवेश समुद्रं स ब्रह्मणा नेक्षित-
स्तदा ॥ २ ॥ गतेषु वेदशास्त्रेषु न स्तः पठनपाठने ॥ श्रौतस्मार्तक्रियाः सर्वाः आसन्लुप्ता जगत्त्रये
॥ ३ ॥ त्यक्त्वा ध्यानं पुरो नैक्षत्पुस्तकानि प्रजापतिः ॥ चिन्तया परया व्याप्तश्चिन्तयामास चेतसि
॥ ४ ॥ शङ्खस्य चरितं बुध्वा ययौ विष्णुं निवेदितुम् ॥ क्षीराब्धौ शायिनं ज्ञात्वा विष्णुं ब्रह्मा शिवं
ययौ ॥ ५ ॥ सुखासीनं शिवं दृष्ट्वा प्रणम्य कमलासनः ॥ प्रमुमोद समाचख्यौ शिवाय शङ्खचेष्टितम्
॥ ६ ॥ ॥ ब्रह्मोवाच ॥ शङ्खेन वेदशास्त्राणि पुराणानि च शंकर ॥ नीतानि ध्यायतो मोहात्सायं मम
जगत्प्रभो ॥ ७ ॥ मम चैव हि देवानां ऋषीणां कर्मलोपनम् ॥ श्रौतस्मार्तक्रिया लुप्ताः कृता दुःखस्य
कारणम् ॥ ८ ॥ क्षीरार्णवस्थितं विष्णुं दृष्ट्वा त्वामहमागतः ॥ उपायं वद मे किंचिच्छ्रौतस्मार्तक्रिया-
वहम् ॥ ९ ॥ ॥ शिव उवाच ॥ ब्रह्माणमवदच्छंभुः श्रुत्वा तद्वचनं पुरा ॥ ब्रह्मन् शङ्खं स निद्रान्ते
विष्वक्सेनो हनिष्यति ॥ १० ॥ ततश्चिन्तातुरो ब्रह्मा मुमूर्च्छ च मुमोह च ॥ उवाच स कदोत्थानं
प्राप्नुयात्कमलापतिः ॥ ११ ॥ वेदशास्त्रपुराणानामानेता शङ्खहारकः ॥ सुखशायी कदा नु स्यात्प्रभुः

पूर्णमनोरथः ॥ १२ ॥ वर्णानां भवितेदानीं संकरः पापवर्धनः ॥ षट्कर्मरहिता जाता मुनयो जगती-
तले ॥ १३ ॥ इत्युक्तवन्तमालोक्य पुनराह हरो विधिम् ॥ ममोपायः स्मृतो ब्रह्मन् शृणु तं स्थिरचेत-
सा ॥ १४ ॥ बन्धुः शङ्खासुरस्यास्ते कमलासुरसंज्ञकः ॥ बलवान्सर्वसंपन्नो देवद्विजनिषूदनः ॥ १५ ॥
विनायकस्य हस्तेन मृत्युस्तस्य भविष्यति ॥ स इदानीं सुसंप्रार्थ्यः स्थिरचित्तेन विश्वसृक् ॥ १६ ॥
श्रुतिस्मृतीरितान्धर्मान्सर्वेषां निर्वहिष्यति ॥ इति श्रुत्वा वचः शैवं संतुतोष चतुर्मुखः ॥ १७ ॥
पद्मासने समासीनो निदध्यौ तं विनायकम् ॥ त्रिनेत्रं च चतुर्बाहुं परशुं कमलं सृणिम् ॥ १८ ॥ पाशं
सिद्धिं च बुद्धिं च वहन्तं सिंहवाहनम् ॥ जपन्नेकाक्षरं[1] मन्त्रं ध्यात्वैवं कमलासनः ॥ १९ ॥ मनसा-
पूजयद्देवं सर्वसिद्धिकरं विभुम् ॥ एकस्मिन्समयेऽपश्यत्पूजान्ते स प्रजापतिः ॥ २० ॥ यादृशं पुरुषं
चित्ते भावितं तादृशं पुरः ॥ दृष्ट्वा ब्रह्मा मुदा युक्तः प्रणनाम विनायकम् ॥ २१ ॥ उत्थाप्य स विधा-
तारं प्रणतं पादयोर्विभुः ॥ अवदच्चटुलं वाक्यं जगद्व्यापी विनायकः ॥ २२ ॥ ॥ विनायक उवाच ॥

१ एकाक्षरो मन्त्रः 'गं' इत्यथर्वशीर्षोक्तः ।

पुराणानां च वेदानां शास्त्राणा नयनं मम ॥ तव चैव च देवानामृषीणां सर्वदेहिनाम् ॥२३॥ दुःखं च दुःखहेतुश्च सर्वं ज्ञातं विधे पुरा ॥ अधुनाहं प्रसन्नस्ते वरदश्च पुराभवम् ॥२४॥ इदानीं त्वं मुदा गच्छ स्वस्थानं कमलासन ॥ कमलासुरनामासौ बन्धुः शङ्खासुरस्य यः ॥ २५ ॥ हनिष्ये तं महावीर्यमसुरं लोकपीडकम् ॥ ज्येष्ठं शङ्खासुरं हन्यान्निद्रान्ते कमलापतिः ॥ २६ ॥ श्रौतस्मार्तक्रियाः सर्वा निर्वहि-ष्यामि[1] पूर्ववत् ॥ द्विजरूपेण यास्यामि मृत्युलोकं चतुर्मुख ॥ २७ ॥ प्राप्स्यामि तत्र विख्यातिं मयूरेश्वरसंज्ञया ॥ इति ते कथितं ब्रह्मन्नवतारप्रयोजनम् ॥ २८ ॥ ॥ शिव उवाच ॥ इत्युक्त्वान्तर्हितो देवो ब्रह्मापि स्वपुरं गतः ॥ प्रत्यैक्षत वचस्तस्य विघ्नराजस्य षण्मुख ॥ २९ ॥ ॥ स्कन्द उवाच ॥ वेदशास्त्रपुराणानामर्थनिर्वाहणं कथम् ॥ अकरोत्परमात्मायं भुवं गत्वा द्विजाकृतिः ॥ ३० ॥ मयूरेश इति ख्यातिं कथं यातः स शंकर ॥ एतन्मे कृपया ब्रूहि समासेन महेश्वर ॥ ३१ ॥ ॥ शिव उवाच ॥ साधु पृष्टं महाबाहो सर्वलोकैकपावनम् ॥ वृजिनौघहरं सर्वकामदं शृण्वतां नृणाम् ॥ ३२ ॥ सर्वसिद्धि-

१ निर्हरिष्यामीत्यपरस्मिन्पुस्तके पाठः ।

करं स्कन्द मयूरेशकथानकम् ॥ समासात्तदहं वक्ष्ये शृणुष्वैकाग्रमानसः ॥ ३३ ॥ स्मृतिशास्त्रपुरा-
णानां वेदानां पुस्तकानि सः ॥ गृहीत्वा द्विजरूपेण रचितानि स्वमायया ॥ ३४ ॥ पीताम्बरपरी-
धानो रम्यपीतोत्तरीयकः ॥ वसुन्धरां समायातो मुनीन्सर्वान्ददर्श सः ॥ ३५ ॥ स्नानसंध्याजपैर्होमैः
स्वाध्यायैर्देवतार्चनैः ॥ आतिथ्यवैश्वदेवाभ्यामष्टाभिर्नित्यकर्मभिः ॥ ३६ ॥ हीनान्दीनमुखांश्चिन्ताव्या-
प्तानेकत्र संस्थितान् ॥ उत्तरन्तं नभोमध्यात्पतन्तमिव भास्करम् ॥ ३७ ॥ ददृशुर्मुनयश्चैनमुल्कापा-
तमिवोज्ज्वलम् ॥ वहन्तं पीतवसने नानापुस्तकधारिणम् ॥ ३८ ॥ अन्तिकागतमालोक्य द्विजं तं
मुनयोऽखिलाः ॥ पप्रच्छुस्तं प्रणम्यादौ निबद्धकरसंपुटाः ॥ ३९ ॥ ॥ ऋषय ऊचुः ॥ स्वागतं ते
महाभाग कुतश्चागमनं कृतम् ॥ शङ्खासुरेण बलिना भ्रष्टाचाराः कृता वयम् ॥ ४० ॥ आतिथ्याय
द्विजश्रेष्ठ पश्यामस्ते न किंचन ॥ अभाग्यं परमं नोऽस्ति विपाकाय समुत्सुकम् ॥ ४१ ॥ भवतामागम-
श्चास्यां विपत्तौ नोऽभवद्यतः ॥ ॥ शिव उवाच ॥ आकर्ण्य वचनं तेषां मुनीनामब्रवीत्स तान् ॥४२॥
॥ ॥ द्विज उवाच ॥ हव्यकव्यक्रियालोपं ज्ञात्वा वो मुनिपुङ्गवाः ॥ नित्यनैमित्तिकानां च काम्यानां

चैव कर्मणाम् ॥ ४३ ॥ दशानां च चतसृणां विद्यानां जगतीतले ॥ आगतोऽस्मि प्रकाशाय चिन्तां
मा कुरुतर्षयः ॥ ४४ ॥ गृह्णन्तु सर्वविद्यानां मत्तः पुस्तकसंचयम् ॥ कुर्वन्तु पूर्ववत्कर्माण्यन्योन्यं
बोधयन्तु वः ॥ ४५ ॥ बल्लाळेति च मन्नाम ख्यातमस्ति जगत्त्रये ॥ यच्छन्तु वसतिस्थानं मम रम्यं
तपोधनाः ॥ ४६ ॥ ॥ शिव उवाच ॥ जहर्षुर्मुनयः सर्वे पीत्वा तद्वचनामृतम् ॥ प्रणेमुस्तुष्टुवुश्चैनं
ददुः स्थानं मनोहरम् ॥४७॥ तदग्रे ननृतुः केचित्केचिदन्योन्यमब्रुवन् ॥ द्विजोऽयं न भवत्येष परमा-
त्मा स्वमायया ॥ ४८ ॥ धृतवानीदृशं रूपमिति नो भाति भो द्विजाः ॥ पुस्तकानि ततो गृह्य
पाठयन्ति स्म केचन ॥ ४९ ॥ अशिक्षन्त गुरोः केचित्ततो विद्याश्चतुर्दश ॥ एवं सर्वाणि कर्माणि
निर्व्यूढानि रसातले ॥ ५० ॥ ततो ज्ञात्वा सुखासीनं शङ्खं स कमलासुरः ॥ अवदत्सर्वकर्माणि
प्रवृत्तानि जगत्त्रये ॥ ५१ ॥ ॥ कमलासुर उवाच ॥ प्रकाशितानि शास्त्राणि वेदाश्च सपुराणकाः ॥
केनचिद्द्विजवर्येण तिष्ठता सुन्दराश्रमे ॥ ५२ ॥ ॥ शिव उवाच ॥ कनीयसो वचः श्रुत्वा बन्धोः
शङ्खस्तमब्रवीत् ॥ ॥ शङ्ख उवाच ॥ ब्रह्मादीनां मुनीन्द्राणां न यस्य गणना मम ॥ ५३ ॥ कोऽसौ

द्विजवरस्तत्र मारणीयः प्रयत्नतः ॥ तद्गच्छ वेगात्तं हत्वा याहि त्वं कमलासुर ॥ ५४ ॥ ॥ शिव उवाच ॥ इति बन्धुवचः श्रुत्वा सेनामादाय सोऽसुरः॥ रभसाभिययौ तत्र यत्रासीत्स द्विजाग्रणीः॥५५॥ बलिनं विकटं वीरं श्मश्रुलं जटिलं खलम् ॥ भीमकायं चमूमध्ये गर्जन्तं हयसंस्थितम् ॥ ५६ ॥ नानाशस्त्रधरैर्वीरैर्नीतिमद्भिरुपासितम् ॥ दूराद्ददर्श तं वीरं सेनां नानाविधां द्विजः ॥ ५७ ॥ एतस्मिन्समयेऽश्रावि नभोवाणी द्विजेन ह ॥ कमलासुरनामायं दैत्यो देवान्मुनीन्द्विषन् ॥ ५८ ॥ आगतश्चतुरङ्गिण्या सेनया संहरन्निव ॥ नभोवाणीमिति श्रुत्वा मुनयः क्षुब्धमानसाः ॥ ५९ ॥ बल्लाळमभितः सर्वे मीलितास्तमथाब्रुवन् ॥ ॥ मुनय ऊचुः ॥ इदानीं किं करिष्यामः क्व यामः शरणं च कम् ॥ ६० ॥ अस्माद्दुष्टतमाद्दैत्यात्त्राता नो भविताऽत्र कः ॥ ॥ शिव उवाच ॥ इति तेषां वचः श्रुत्वा बल्लाळः प्राह तान्मुनीन् ॥ ६१ ॥ ॥ बल्लाळ उवाच ॥ पश्यन्तु कौतुकं सर्वे यूयं त्यक्त्वा भयं मम ॥ इदानीमेव सबलं नाशयिष्ये रिपुं बलात् ॥ ६२ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा मायया कायान्निर्ममेऽनेकधा चमूम् ॥ जगर्ज गर्जतो वीरान्ससर्ज द्विजसत्तमः ॥ ६३॥ नाना शस्त्राणि वाद्यानि बिभ्रतोऽ-

नेकरूपिणः ॥ निदेशं[1] कुरु नः केचिदवदंस्ते तदा द्विजम् ॥६४॥ बल्लाळो मुनयः सर्वे वीरास्ते मुमुदुर्भृशम् ॥६५॥ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये बल्लाळसेनावर्णनं नाम पञ्चदशोऽध्यायः॥१५॥

॥ शिव उवाच ॥ दृष्ट्वा वीरांस्तथाभूतान् द्विजरूपी विनायकः ॥ स्वयं च भीमकायोऽभूद्दशहस्तो दशायुधः ॥ १ ॥ कमलं परशुं पाशमङ्कुशं च गदां दृढाम् ॥ असिं त्रिशूलं चक्रं च डमरुं तोमरं तथा ॥ २ ॥ दक्षे पञ्च तथा वामे बिभ्रतं वीरमध्यगम् ॥ दृष्ट्वा सर्वे मुनीन्द्रास्ते तथाभूतं[2] विसिस्मिरे ॥ ३ ॥ ददृशुर्द्विजसेनां तां कमलासुरसैनिकाः ॥ समाचष्टासुरं कश्चित्कमलं स्वासने स्थितम् ॥ ४ ॥ ॥ दूत उवाच ॥ रिपुणा ते धृतो देहो नभःस्पर्शी भयंकरः ॥ बिभ्रता दश शस्त्राणि घोरा वीराश्च निर्मिताः ॥ ५ ॥ नेक्ष्यते पुरुषो योद्धुं तेन साकं जगत्त्रये ॥ ॥ शिव उवाच ॥ श्रुत्वैवं सहसोत्थाय निजसेवकभाषितम् ॥ ६ ॥ उवाच रुट्परीताक्षः कमलः कालनोदितः ॥ ॥ कमल उवाच ॥ ब्रह्माणं शंकरं विष्णुमिन्द्रं वा गणयामि न ॥ ७ ॥ युद्धे मत्पुरतः को नु विष्टपे स्थातुमुत्सहेत् ॥ एकेन शरघातेन

१ निदेशकारिणः केचिदवदन्साधुसाध्विति इति पाठः । २ तदा भूयो इति पाठः ।

हनिष्ये सबलं द्विजम् ॥ ८ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा हयमारूढः सायुधः कमलासुरः ॥ गृही-
त्वा सैनिकान्सर्वान्द्विजं योद्धुमुपागमत् ॥ ९ ॥ संघट्टमापतुरुभे द्विजासुरबले यदा ॥ तदा कोला-
हलो जातो दशदिक्षु भयावहः ॥ १० ॥ निघ्नन्तश्चापि शब्दन्तोऽयुध्यन्वीराः परस्परम् ॥ नानाश-
स्त्रास्त्रपातेन मुष्टिघातेन केचन ॥ ११ ॥ अश्वारोहा गजारोहा रथारोहाः पदातयः ॥ निपेतुः शतशो
भूमौ द्विजसेनाचरैर्हताः ॥ १२ ॥ दैत्यसैन्यचरैश्चापि भक्षितास्ते चमूचराः ॥ भिन्नोरसश्छिन्नभुजा-
श्छिन्नशीर्षाः कृताः परे ॥ १३ ॥ एवं युद्धमभूद्घोरमन्योन्यं बलयोर्भृशम् ॥ एकदाऽसुरवीरांस्ताञ्जिगाय
द्विजवाहिनी ॥ १४ ॥ माभैष्टेति च तानुक्त्वा कमलो युयुधे भृशम् ॥ नाराचकृत्तहृदयान्खड्गभिन्नशि-
रोधरान् ॥ १५ ॥ असिद्विधाकृतान्वीरान्रणे स समपातयत् ॥ एकमत्याऽकिरन्बाणैः कमलं द्विजसै-
निकाः ॥ १६ ॥ दृष्ट्वा तत्कमलो दैत्यः सस्मारोशनसेरितम् ॥ मन्त्रं जजाप मनसा शतमष्टोत्तरं ततः
॥१७॥ तेनाभ्यमन्त्रयद्बाणं सर्वास्त्रमिति संज्ञितम् ॥ तत्याज द्विजसैन्ये तं नत्वा तद्दैवतं गुरुम् ॥१८॥
असंख्यातास्ततः सर्पा निर्गतास्तानवेष्टयन् ॥ न्यपतन्भूतले वीरा मृताः केचिद्भयातुराः ॥ १९ ॥

हाहाकारं रुषा चक्रुः पितरं सस्मरुः परे ॥ दध्मौ वाद्यं च हर्षेण ननर्त कमलासुरः ॥ २० ॥ दृष्ट्वैवं
क्रोधदीप्तोऽसौ द्विजरूपी विनायकः ॥ अभिमन्त्र्य निजं चक्रं रिपुसैन्येषु चाक्षिपत् ॥ २१ ॥ अनेकानि
च चक्राणि निससस्रुरितस्ततः ॥ एकैकं निजघानाथ वीरमेकैकमोजसा ॥ २२ ॥ छिन्नोदराश्छिन्नभु-
जा असुराश्छिन्नमस्तकाः ॥ जुघूर्णुः पतिता भूमौ दृष्ट्वा तानसुरास्तदा ॥ २३ ॥ कमलश्चिन्तया व्याप्तो
ह्यशक्तस्तन्निवारणे ॥ गदामादाय युयुधे चिरकालं द्विजेन सः ॥ २४ ॥ शस्त्रास्त्रविद्यां महतीं तस्मै
सोऽदर्शयद्द्विजः ॥ भग्नशस्त्रोऽभवद्व्याप्तो दशदिक्षु विनायकम् ॥ २५ ॥ पश्यन्भग्नबलो यातः स्वावासं
कमलो रणात् ॥ स्वाश्रमं मुनिभिर्जुष्टं ततो यातो विनायकः ॥ २६ ॥ प्रशशंस महावीर्यं कमलं
मुनीनां पुरः ॥ शुशोच निहतान्वीरान्माता पुत्रानिवौरसान् ॥ २७ ॥ मुनीनां प्रवरः प्राह गौतमस्तं
विनायकम् ॥ शोचन्तं निजसैन्याय जगद्योनिं जगत्पतिम् ॥ २८ ॥ ॥ गौतम उवाच ॥ किं
शोचसि महाभाग जगत्कारणकारण ॥ त्वत्तः सर्वाणि भूतानि भुवनानि चतुर्दश ॥ २९ ॥ आविर्भ-
वन्ति त्वय्येव लीयन्ते च पुनः पुनः ॥ कुत्र पूर्वं स्थिता वीरा त्वयैवोत्पादिताः पुरा ॥ ३० ॥ इदानीं

त्वत्प्रसादेन जीवयिष्यामि तान्द्विज ॥ आज्ञां देहि महाभाग पश्य मेऽद्भुतकौतुकम् ॥ ३१ ॥ ॥ वि-
नायक उवाच ॥ सत्यमुक्तं त्वयाऽज्ञायि प्रभावो मुनिनां मया ॥ तव कुम्भोद्भवस्यापि कश्यपस्य महामते
॥ ३२ ॥ अन्येषामृषिमुख्यानां ज्ञातं चास्ति महो मया ॥ अहमेव करिष्यामि वीराणां जीवनं क्षणात्
॥ ३३ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा देवदेवोऽसौ गौतमं द्विजरूपधृक् ॥ जप्त्वा संजीविनीं विद्यां
तदा स दशबाहुभृत् ॥ ३४ ॥ अभिमन्त्र्य जलं तेषु सिञ्चति स्म विनायकः ॥ उत्तस्थुः क्षणमात्रेण
सर्वे वीरा द्विजस्य ते ॥ ३५ ॥ आश्चर्यं परमं चक्रुरखिला मुनयस्तदा ॥ उपवेश्य मुनीन्सर्वानपृच्छत्स
विनायकः ॥ ३६ ॥ अस्य दैत्यस्य नाशाय उपायः कथ्यतां द्विजाः ॥ देवमूचुर्मुनिश्रेष्ठाः पृच्छन्तं तं
विनायकम् ॥ ३७ ॥ ॥ मुनय ऊचुः ॥ किं नः पृच्छसि देवेश ज्ञातमस्त्यखिलं त्वया ॥ जानीमस्त्व-
त्प्रसादेन गतं भूतं च भावि च ॥ ३८ ॥ ॥ शिव उवाच ॥ विनायकं बभाषेऽथ गार्ग्यस्तं मुनिपुङ्गवः
॥ ॥ गार्ग्य उवाच ॥ सर्वज्ञस्य पुरस्तेऽपि मम भाति प्रयोजनम् ॥ ३९ ॥ एकं तेन भवेत्कार्यसिद्धि-
स्तव विनायक ॥ स्वं त्यक्षत्यसुरः सर्वं मोहकार्यस्त्रमुत्तमम् ॥ ४० ॥ कुरुष्व हवनं देव आगमोक्तं

मयेरितम् ॥ एभिर्ऋषिगणैः सार्धं साङ्गं त्वं वेगवत्तरम् ॥ ४१॥ मयूरं प्राप्स्यसे तस्मात्तमारुह्य रिपुं जहि ॥ ॥ शिव उवाच ॥ गार्ग्यस्य गिरमाकर्ण्य देवस्तामनुमन्यत ॥ ४२ ॥ चकारर्षिगणैः साकं हवनं साङ्गमादरात् ॥ ततः पूर्णाहुतेरन्ते कुण्डान्ते ददृशेऽखिलैः ॥ ४३ ॥ मयूरो बर्हिणां भारं बिभ्राणः सिंहविक्रमः ॥ तमारुरोह भगवान्मयूरं स विनायकः ॥ ४४ ॥ तं तथाविधमालोक्य जहृषुः परमर्षयः ॥ मयूरेश्वरसंज्ञां ते चक्रुस्तस्मै तदा मुदा ॥४५॥ इति ते कथितं स्कन्द वेदशास्त्रप्रयोजनम् ॥ भुवं गत्वा यथा तेन कृतं विघ्नहरेण ह ॥४६॥ मयूरेश्वरसंज्ञायाः कारणं च तवेरितम् ॥ कमलासुरनाशं च इदानीं शृणु षण्मुख ॥४७॥ इति श्रीस्कन्दपुराणे वैनायके मयूरेश्वरसंज्ञाभिवर्णनं नाम षोडशोऽध्यायः ॥१६॥

॥ ॥ शिव उवाच ॥ आज्ञया सकलर्षीणां सुखाय सर्वदेहिनाम् ॥ असुरस्य च मोक्षाय रणं यातुमुपाक्रमत् ॥ १ ॥ मयूरेशो जगत्स्रष्टा सर्वभूतहितार्थकृत् ॥ एतस्मिन्समये बुद्धिरवादीत्तं विनायकम् ॥ २ ॥ ॥ बुद्धिरुवाच ॥ अहं योत्स्यामि देवेश कमलेन जगत्प्रभो ॥ आज्ञां देहि महाभाग यदि तेऽनुग्रहो मयि ॥ ३ ॥ ॥ शिव उवाच ॥ सुन्दरायै सुभूषायै सबलायै महौजसे ॥ स्वप्रियायै गदा-

पाणि(?)बुध्यै स बर्हिवाहनः ॥ ४ ॥ आज्ञां ददौ मुदा युक्तः सेनां च चतुरङ्गिणीम् ॥ आज्ञां सेनां च
संगृह्य रूपं च भीतिदायकम् ॥ ५ ॥ ययौ बुद्धी रणस्थानं ज्ञात्वा तां कमलासुरः॥ आगतो वाहिनीं
गृह्य दृष्ट्वा तां हर्षमावहन् ॥ ६ ॥ अकस्मान्निर्ममे सापि वीरान्घोराननेकशः ॥ आवेशाद्युयुधुर्जघ्नुर्वी-
रास्ते तैः परस्परम् ॥ ७ ॥ पादजानुशिरोहस्तघातैः प्राणान्जहुः परे ॥ एकं[1]पादमधो धृत्वा द्वितीया-
कर्षणेन च ॥ ८ ॥ उत्पेतुस्तरसा वीराः कमलासुरसैन्यगान् ॥ जक्षुस्तान्पिपिषुश्चान्यानसुरान्परसैनि-
कान् ॥ ९ ॥ अथ बुद्धेः कोपभाजः शरीरात्परमः पुमान् ॥ निःसृतः पुरतस्तस्याः पप्रच्छ जनकं
निजम् ॥ १० ॥ कुत्रास्ते मत्पिता मातः कस्यासि त्वं परिग्रहः ॥ ॥ बुद्धिरुवाच ॥ पुरस्तादाश्रम-
स्यान्ते मुनिमध्यचरो विभुः ॥११॥ आरुह्य बर्हिणं यः स्याद्दशहस्तः पिता स ते ॥ ॥ शिव उवाच ॥
इति प्रश्नोत्तरं श्रुत्वा बुद्ध्या यत्समुदीरितम् ॥१२॥ अभियातः स वेगेन मयूरेशं धियः सुतः ॥ मुनीनां
मध्यगं वीरं महाबर्हिणि संस्थितम् ॥ १३ ॥ दृष्ट्वा दशभुजं रम्यमोजसा तेजसान्वितम् ॥ दण्डवत्प्रण-

१ एकं वीरमधो धृत्वा इति पाठः ।

नामासौ मुनीना च पितुः पुरः ॥ १४ ॥ अवदंस्ते मयूरेशमयं लाभो महांस्तव ॥ अभवद्बुद्धितः पुत्रो धनुर्विद्याविशारदः ॥ १५ ॥ तानुवाच प्रसन्नात्मा मुनीन्विघ्ननिवारणः ॥ ॥ मयूरेश उवाच ॥ अयं लाभ इति प्रोक्तं युष्माभिस्तथ्यवाणिभिः ॥ १६ ॥ अतस्त्रिविष्टपे ख्यातः स्यादयं लाभसंज्ञया ॥ ॥ शिव उवाच ॥ तमादिदेश भ्रूक्षेपादेव उत्थाप्य संगरम् ॥ १७ ॥ भ्रूकटाक्षं पितुर्ज्ञात्वा ततो लाभो ययौ रणम् ॥ विनायकोऽपि तत्पश्चाद्ययौ द्रष्टुं पराक्रमम् ॥ १८ ॥ षट्पञ्चाशत्सहस्रेण युयुधे स बलेन ह ॥ संग्राममकरोद्घोरं वीर्यवद्भिस्तदासुरैः ॥ १९ ॥ कमलः स हयारूढो गत्वा लाभं वचोऽब्रवीत् ॥ ॥ कमल उवाच ॥ किमर्थं मृत्युभवनं यातुमिच्छसि बालक ॥ २० ॥ स्वावासं गच्छ दुर्बुद्धे बुद्धिपुत्र ममाज्ञया ॥ ॥ शिव उवाच ॥ श्रुत्वापि वचनं तस्य जघ्ने वीरान्सहस्रशः ॥ २१ ॥ लाभेन सहसा प्रोचे ततः स कमलासुरः ॥ ॥ लाभ उवाच ॥ इदानीं यदि त्वां हन्मि कोपं कुर्यात्पिता मम ॥२२॥ अद्य श्वो वा स ते कुर्यान्निधनं कमलासुर ॥ युध्यस्व यदि ते शक्तिः किमर्थं वल्गसे खल ॥२३॥ ॥ शिव उवाच ॥ श्रुत्वैवं वचनं तस्य रुषा जज्वाल सोऽसुरः॥ तत्याज मोहनास्त्रं स सर्वमोहनकारकम्॥

॥ २४ ॥ दैवाल्लाभं विना सैन्यं मुमोह सकलं तदा ॥ निःशब्दं निष्क्रियं मन्दं निशि सुप्तमिवाभवत्
॥२५॥ मोहं गते मयूरेशे मायाविनि कुतूहलात् ॥ सैन्ये चर्षिसमूहे च लाभः शोकमथाकरोत्॥२६॥ ॥
लाभ उवाच ॥ किं कुर्यामहमेकाकी परमात्मा पिता मम ॥ निर्मोहोऽपि गतो मोहं तत्र का गणना
हि मे ॥ २७ ॥ ममापि न कथं निद्रा सैनिकैः सह चागता ॥ ॥ शिव उवाच ॥ एवं शोचंस्तदा
लाभः सावधानो बभूव ह ॥ २८ ॥ स उत्थापयितुं यातः प्रतिवीरं धियः सुतः ॥ क्रियाहीनास्तदा
सर्वे नोचुर्लाभाय किंचन ॥ २९ ॥ एवंविधं तदा सैन्यं दृष्ट्वा लाभो व्यचारयत् ॥ ॥ लाभ उवाच ॥
अस्यैव मायया चाहं न प्राप्तो मोहमद्भुतम् ॥ ३० ॥ जानामि मोहनास्त्रस्य संहारं देवनाम च ॥
उभयोर्योगतः कुर्यां प्रबोधं सर्वदेहिनाम् ॥ ३१ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा जलमादाय शतमष्टो-
त्तरं जपन् ॥ नाम वैनायकं मन्त्रं ताभ्यां तदभिमन्त्र्य सः ॥ ३२ ॥ असिंचत्सर्वसैन्येषु लाभस्तत्र परि-
भ्रमन् ॥ उच्चचार प्रतिश्रोत्रं नाम वैनायकं तदा ॥ ३३ ॥ नाममन्त्रप्रभावेण सोत्तस्थावखिला चमूः ॥
मयूरेशो न चोत्तस्थौ द्रष्टुमोजस्तु लाभजम् ॥ ३४ ॥ अभितो लाभमासीना सेनास्याशाभिलाषिणी ॥

अथ गौतममाहूय लाभो वचनमब्रवीत् ॥ ३५ ॥ ॥ लाभ उवाच ॥ स्वस्यैव मायया चायं मोहयत्य-
खिलं जगत् ॥ स्वप्रकाशश्चिदानन्दः स कथं मोहमृच्छति ॥ ३६ ॥ विधायान्तर्हितो देवोऽवतारस्य
प्रयोजनम् ॥ किंनु सुप्तः सुखेनासौ मासषट्कं शयिष्यति ॥ ३७ ॥ सिद्धिं बुद्धिं च मां किं नु त्यक्त्वा
रम्यं गतः स्थलम् ॥ विनैनं न समर्थोऽहं धर्तुं प्राणान्हि गौतम ॥ ३८ ॥ अस्यार्थे जुहुयामद्य प्राणा-
न्पञ्चानले शुभे ॥ ॥ शिव उवाच ॥ इत्युक्त्वा गौतमं लाभः शोकं कृत्वाप्यनेकधा ॥ ३९ ॥ प्रेषया-
मास तान्वीरानानेतुं काष्ठसंचयम् ॥ अनिवार्यगिरस्तस्य श्रुत्वाज्ञां वेगवत्तराम् ॥ ४० ॥ गत्वा दूरात्त
आनिन्युरिन्धनानां महाचयम् ॥ अग्निमानीय संपूज्य लाभस्तत्राक्षिपत्स्वयम् ॥ ४१ ॥ प्रजज्वाल
महानग्निर्जगदातङ्ककारकः ॥ पश्यत्स्वखिलवीरेषु रुरोद करुणस्वरम् ॥ ४२ ॥ रुरुदुर्मुनयो वीरं दृष्ट्वा
लाभं तथाविधम् ॥ जपन्वैनायकं नाम लाभो यावज्जहौ तनुम् ॥ ४३ ॥ श्रुत्वा चाक्रन्दनं तेषां मुनी-
नां भावितात्मनाम् ॥ दुःखं सेनाचराणां च लाभस्यापि सुनिश्चयम् ॥ ४४ ॥ ज्ञात्वा तावज्जहौ निद्रां
मयूरेशोऽखिलार्थवित् ॥ मुनिसेनाचराः सर्वे हर्षमापुर्निरीक्ष्य तम् ॥ ४५ ॥ आननन्दुर्नमश्चक्रुरालि-

लिङ्गुर्विनायकम् ॥ तत्र वाद्यान्यनेकानि नेदुर्दुन्दुभयो दिवि ॥ ४६ ॥ सुप्रसन्नोऽभवद्भानुः प्रसेदुः ककुभो दश ॥ बृहद्भानुः शमं यातोप्यवाद्वायुः सुशीतलः ॥ ४७ ॥ इति श्रीविनायकमाहात्म्ये मोहनास्त्रनिवारणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ ॥ ॥

श्रीशिव उवाच ॥ आश्वास्य सकलं सैन्यं लाभं च स विनायकः ॥ आरुरोहोरगभुजं ययौ तं कमलासुरम् ॥ १ ॥ तुलयामास दोर्दण्डान्दश शस्त्रभृतस्तदा ॥ नीलकण्ठं समारूढं दृष्ट्वा तमम्बरस्पृशम् ॥ २ ॥ अवदत्कमलो वाक्यमजानंस्तस्य चेष्टितम् ॥ ॥ कमलासुर उवाच ॥ किं त्वया मत्पुरो युद्धं कर्तव्यं पक्षिवाहन ॥ ३ ॥ एकमेवावदानं ते कुर्यामद्य बुभुक्षितः ॥ अथवा तलघातेन चूर्णयिष्यामि ते वपुः ॥ ४ ॥ न ज्ञातं तव सामर्थ्यं यदा सर्वे विमोहिताः ॥ कियन्तो निहता वीराः पूर्वे युद्धे मया क्षणात् ॥ ५ ॥ ॥ शिव उवाच ॥ एवं नानाविधैर्वाक्यैरसुरो निरभर्त्सयत् ॥ आदाय सकलं सैन्यमारुह्याश्वं पुरो ययौ ॥ ६ ॥ कमलासुरवाणीं तां निपीय बर्हिवाहनः ॥ बोधयन्प्रत्युवाचैनं मुदा दशभुजो विभुः ॥ ७ ॥ ॥ मयूरेश उवाच ॥ विमूढा मां न जानन्ति लीलाविग्रहधारिणम् ॥ भ्रुवोर्विक्षेपमात्रेण

कुर्यामद्य जगत्क्षयम् ॥ ८ ॥ ज्ञात्वैवाहं प्रभावं तेऽवतारं धृतवानमुम् ॥ भवादृशानां दुष्टानामनन्तानां
निपातनात् ॥ ९ ॥ नाना नामानि मे लोकान्पावयन्ति युगे युगे ॥ कमलासुर मे पश्य कौतुकं
युध्यतो रणे ॥ १० ॥ ॥ शिव उवाच ॥ इत्युक्त्वा गदया देवो जघान कमलासुरम् ॥ सोऽपि कोपा-
द्विभुं देवं मुद्गरेणाहनद्बलात् ॥ ११ ॥ तोमरेणाहनत्सोऽथ कमलं दैत्यपुङ्गवम् ॥ खेटकाघाततः सोऽपि
न्यवारयत तोमरम् ॥ १२ ॥ त्रिशूलेनाहनत्पश्चाद्दशहस्तोऽसुरं बलात् ॥ न्यपतन्मूर्छया दैत्यः क्षणादु-
त्थितवान्पुनः ॥ १३ ॥ अयुध्यदव्रणो दैत्यस्तेनासौ रणदुर्धरः ॥ घोरं युद्धं तयोर्देवा विमानस्था
व्यलोकयन् ॥ १४ ॥ अस्त्रमस्त्रेण शस्त्रं तौ शस्त्रेणैव निवव्रतुः ॥ बाणैर्बाणान्समारब्धावनेकांस्तौ
चुचूर्णतुः ॥ १५ ॥ अथ त्यक्त्वा मयूरेशं कमलः सैन्यमाविशत् ॥ कांश्चिच्च पातयामास भूमौ हत्वा
धनुर्धरान्[१] ॥ १६ ॥ प्रवहन् शोणितौघानां महानद्यः समुद्रगाः ॥ तद्दृष्ट्वामर्षसंतप्तो लाभो वेगाद्गतस्तदा
॥१७॥ मुष्टिघातेन तस्याश्वमनुक्त्वैवाहनत्कृशम् ॥ न्यपतद्भूतले दैत्यस्त्यक्त्वा प्राणान्हयोऽपि सः ॥१८॥

१ शिरोधरान् इति पाठः ।

कमलः सहसोत्थाय भूमेरुड्डीय[1] संस्थितः ॥ जप्त्वा मन्त्रं भार्गवोक्तमाकाशे पवनासने ॥ १९ ॥ बलं वीर्यं तथा तेजो यस्य तस्य हयेन किम् ॥ इत्युक्त्वा शरसंधानमकरोद्देवमस्तके ॥ २० ॥ ववर्ष शरधाराभिर्वर्षामेघ इवापरः ॥ ध्वान्तं तत्राभवद्धोरं भयभीता च सा चमूः ॥ २१ ॥ शरवर्षप्रहारेण जहुः प्राणांश्चमूचराः ॥ छिन्नोरुजघनाः केचिन्मुमूर्छुः पतिता भुवि ॥२२॥ यथायथाऽपतन्वीरा हर्षमाप तथासुरः ॥ एवं तेनाखिलं स्कन्द वैनायकबलं हतम् ॥२३॥ नभोऽवस्थितमालोक्य मयूरेशोऽवदत्खलम् ॥ ॥ मयूरेश उवाच ॥ अनीशो मत्पुरः स्थातुमुड्डीय नभसि स्थितः ॥ २४ ॥ ओजः पश्य ममेदानीं त्रिधा त्वां करवै क्षणात् ॥ ॥ शिव उवाच ॥ इत्युक्त्वा पाशशस्त्रं स तत्याज कमलासुरे ॥ २५ ॥ तस्तार तरसा तेजः सौरं पाशः स्वतेजसा ॥ उदरं तस्य संवेष्ट्य नभोमध्यनिवासिनः ॥ २६ ॥ मयूरेशपुरोभागे कमलं पाश उज्जहौ ॥ दृष्ट्वा तं तु मयूरेशोऽवदन्मुक्तो[2] भवेति च ॥ २७ ॥ इत्युक्तः कमलः कोपादहनद्गदया विभुं ॥ प्रतिशस्त्रनिपातेन वारयामास तां गदाम् ॥ २८॥ विनायकोपि शस्त्रौघैरहन-

१ भूमेरुड्डीय संस्थितः । २ वदन्मुक्तिं भजत्विति ।

त्कमलासुरम् ॥ असृक्पपात यद्भूमौ कमलस्य ततोऽभवन् ॥ २९ ॥ तद्रूपा असुरा घोराः शतशोऽथ सहस्रशः ॥ युगपत्ते मयूरेशं जघ्नुः शस्त्रैश्चमूं च ताम् ॥ ३० ॥ दृष्ट्वा लाभो मयूरेशमसुरैः परिवारितम् ॥ मातरौ सिद्धिबुद्धी स सस्मार प्रविदारणे ॥ ३१ ॥ वेगाद्याते सिद्धिबुद्धी मयूरेशं ददर्शतुः ॥ किरन्तं दश शस्त्राणि दैतेयैः परिवारितम् ॥३२॥ ससर्जतुर्भूतसृष्टिं संख्यया नवकोटिका ॥ भक्ष्यं दत्तं ममेत्याह सिद्धिबुद्धी उभे तु सा ॥ ३३ ॥ दर्शयामासतुरुभे तस्याः कमलवाहिनीम् ॥ आहतुः सिद्धिसैन्यं त्वमिति तेषां षडानन ॥ ३४ ॥ आज्ञया सिद्धिबुद्ध्योः साभ्यवजहे पताकिनीम् ॥ एधमानामसृक्पातैर्विभुं संवेष्ट्य संस्थिताम् ॥ ३५ ॥ आसुरीमहनत्सेनां भूतसृष्टिर्विभुश्च ताम् ॥ यत्र यत्र पपातासृग्लिलिहे तत्रतत्र सा ॥ ३६ ॥ कमलासृग्भवाश्चैवमखिला भक्षिता हताः ॥ पपात कमलः सोऽथ मयूरेशस्तमन्वगात् ॥ ३७ ॥ शरवृष्टिं चकाराशु एकाकी कमलः पुनः ॥ मयूरेशोऽसिपातेन तां तदा निववारह ॥ ३८ ॥ अथ कोपारुणो वीरो मयूरेशः प्रतापवान् ॥ कर्तुमाजिं समर्थोऽपि समर्थं दैत्यपुङ्गवम् ॥ ३९ ॥ त्रिशूलेनाहनत्क्रूरं कमलं युद्धदुर्मदम् ॥ त्रिशूलेन त्रिधा भूतस्त्रिषु स्थानेषु सोऽपतत् ॥ ४० ॥

भीमाया दक्षिणे भागे कृष्णायाश्चोत्तरे तथा ॥ निपपात शिरस्तत्र कमलस्य षडानन ॥ ४१ ॥ तत्रैवा-
वस्थितश्चायं पाशहस्तो मयूररूट् ॥ उदरं राजसदने पतितं तस्य दुर्मतेः ॥ ४२ ॥ जघनं पतितं चास्य
प्रवालाख्ये सुपत्तने ॥ एवं तेन कृतः स्कन्द कमलो मुक्तिभाजनः ॥ ४३ ॥ ततः सुरगणाः सर्वे ब्रह्मे-
न्द्राग्निपुरोगमाः ॥ आगताः परमात्मानं मयूरेशं मुदाश्लिषन् ॥ ४४ ॥ नानास्तोत्रैः प्रसाद्यैनं नमः कृ-
त्वा सुरादरात् ॥ उपविष्टेषु देवेषु ब्रह्मा तं पर्यपूपुजत् ॥४५॥ सर्वतीर्थाहृतं तोयमास तस्य कमण्डलौ ॥
ताभिरद्भिर्मयूरेशं स्नापयित्वाथ षोडश ॥ ४६ ॥ उपचारान्महाभक्त्या ब्रह्मासौ समपादयत् ॥ कृत्वा
प्रदक्षिणं देवा मन्त्रपुष्पाण्यवेदयन् ॥ ४७ ॥ न्युब्जतामगमत्तस्य स्खलनात्स कमण्डलुः ॥ सरित्तत्र
समुद्भूता सर्वतीर्थमयी शुभा ॥ ४८ ॥ सस्नुस्तत्र मुदा देवा ऋषयो गौतमादयः ॥ तर्पणश्राद्धदानानि
पितृतृप्तिकराणि ते ॥ ४९ ॥ चक्रुः पुनर्मयूरेशमानर्चुर्भक्तितोऽखिलाः ॥ यतते कः स आहर्तुं सरितं
तां कमण्डलौ ॥ ५० ॥ ततः प्रोवाच भगवान्मयूरेशश्चतुर्मुखम् ॥ ॥ मयूरेश उवाच ॥ अस्त्वियं
मर्त्यलोकस्य दर्शनात्क्लेशहारिणी ॥ ५१ ॥ एनःक्षयकरी स्पर्शात्पानादिन्द्रपुरप्रदा ॥ स्नानान्मुक्तिप्रदा

नृणां मयि भक्तिमतां द्विज ॥ ५२ ॥ गृहाण पूरयित्वा त्वं ब्रह्मन्स्वीयं कमण्डलुम् ॥ अद्यप्रभृति भो ब्रह्मन्नहमत्रैव संस्थितः ॥ ५३ ॥ ॥ शिव उवाच ॥ इत्युक्त्वा संस्थितस्तत्र प्रासादे देवनिर्मिते ॥ तेनोक्तं सकलं कृत्वा सूपविष्टः प्रजापतिः ॥ ५४ ॥ रमारमेश्वरौ देवौ प्राग्द्वारे तस्य संस्थितौ ॥ देवी मुक्तिप्रदा नृणामाश्रये चास्य संस्थिता ॥ ५५ ॥ उमामहेशनामानौ तस्थतुर्द्वारि दक्षिणे ॥ स्थिता तयोः पुरो देवी विरजाख्या शुभप्रदा ॥ ५६ ॥ पश्चिमे संस्थितौ स्कन्द कामदौ रतिमन्मथौ ॥ स्थिता तयोः पुरस्तत्र देवी मार्जारहूतिका ॥ ५७ ॥ मही चैव वराहश्च संस्थितौ द्वारि चोत्तरे ॥ मुक्तिदा सर्वजन्तूनां देवी मुक्ताभिधा स्थिता ॥ ५८ ॥ आदौ स्नात्वा महानद्यां दृष्ट्वा मोरेश्वरं विभुम् ॥ पुनः स्नात्वा नमस्कृत्य पूजयेद्द्वारदेवताः ॥ ५९ ॥ पुनर्नत्वा मयूरेशं देवं दृष्ट्वा प्रपूजयेत् ॥ दक्षिणे द्वारि चैवं स्यात्पश्चिमे च तथोत्तरे ॥ ६० ॥ एकस्मिन्दिवसे चैवं यः कुर्याद्द्वाश्चतुष्टयम् ॥ ईप्सितानाप्नुयादर्थान्मुक्तिमन्ते स धर्मधीः ॥ ६१ ॥ भाद्रशुक्लचतुर्थ्यां वा कुर्याद्द्वारचतुष्टयम् ॥ उपोष्य वा चतूरात्रं मयूरेशस्य तुष्टये ॥ ६२ ॥ अधनो धनमाप्नोति पुत्रार्थी पुत्रमाप्नुयात् ॥ विद्यार्थी चाप्नुयाद्विद्यामेता यात्रां

करोति यः॥६३॥ यशः प्रज्ञां तथा कीर्तिं पौत्रानश्वादिसंपदः॥ आरोग्यं परमामृद्धिं लभते भोगमुत्तमम्
॥६४॥ ततः प्रभृति तत्स्थानं विख्यातं विष्टपत्रये॥ प्रथितः परमात्मापि मयूरेश्वरसंज्ञया॥६५॥ संस्थितो
राजसदने प्रवालाख्ये च पत्तने ॥ पूरकः सर्वकामानां यात्राकारिनृणां विभुः॥६६॥ अवतारः पञ्चमोऽयं
गदितस्ते मया सुत ॥ सांप्रतं कथ्यमानं ते शृणु षष्ठं षडानन ॥ ६७ ॥ महिमानमिमं शृणोति भक्त्या
शितिकण्ठाधिरुहः पवित्रमत्र ॥ अमृतं स लभेद्विहाय देहं भुवि भोगान्परमात्मनः प्रसादात्॥६८॥ इति
श्रीस्कन्दपुराणे विनायकमाहात्म्ये शिवस्कन्दसंवादे मयूरेश्वरा वतारवर्णनं नामाष्टादशोऽध्यायः॥१८॥ ॥
श्रीशिव उवाच ॥ आसीत्पुरा विन्ध्यदेशे नाम्ना पूर्या हि पार्वती ॥ तस्या धूमोऽभवद्राजा सुरासुरनि-
बर्हणः ॥ १ ॥ श्यामाङ्गः श्यामदशनः श्मश्रुलः श्यामलालकः ॥ नानालंकारशोभाढ्यो नानामालावि-
भूषितः ॥ २ ॥ बह्वश्वोऽनेकपत्तीकोऽनेकानेकपवारितः ॥ अनेकरथसंपन्नोऽनेकसंपद्विराजितः ॥ ३ ॥
शंकराराधने सक्तः शिवभक्तप्रियः सदा ॥ तिष्ठन्स्वपन्व्रजन्भुंजन्संस्मरञ्शिवमव्ययम् ॥ ४ ॥ चिन्ता-

मणिर्धर्ममूर्तिः संपातिर्विपुलश्च सन् ॥ विक्रमो बुद्धिमांश्चैव विद्रुमश्चाप्यमात्यकाः[1] ॥ ५ ॥ महीपालोऽथ नरजिन्नन्दनो वीरभद्रकः ॥ चत्वारो धूमपुत्राश्च सत्यसंधा रणंजयाः ॥६॥ प्रियास्य कौशिका स्कन्द नानालंकारभूषिता ॥ सुमुखी सुस्वरा सुभ्रूः सुनेत्रा सुमनोहरा ॥ ७ ॥ एकस्मिन्समये धूमो राजा भद्रमुपागमत् ॥ राजपुत्रप्रधानानां पृथक्स्थानविराजितम् ॥ ८ ॥ चन्दनस्तम्भसंस्पर्शिकालागरुतुलं शुभम् ॥ नीलाश्मदेहलीदीप्तखुनीलाजिरशोभितम् ॥ ९ ॥ निशि चन्द्रकरस्पर्शस्रवच्चन्द्रमणि क्वचित् ॥ क्वचिन्निर्झरसंयुक्तं हिमवच्छिखरं यथा ॥१०॥ नुदच्छीतार्तं जन्तूनामर्काश्मरश्मिभिर्हिमम् ॥ प्रतिबिम्बानि दृश्यन्ते यत्कुड्येषु च सर्वतः ॥ ११ ॥ मध्ये राजासनं तत्र धूमोऽसावुपविष्टवान् ॥ प्रधानाश्चैव पुत्राश्च तथान्ये राजसेवकाः ॥१२॥ अन्ये सेनाचरा वीराः स्वंस्वं स्थानमुपाविशन् ॥ अस्तौषन्बन्दिनः सर्वे नेदुर्वाद्यान्यनेकशः ॥ १३ ॥ जगुर्मधुरगीतानि ननृतुर्वारयोषितः ॥ वेदवेदाङ्गसंपन्नश्चतुःशास्त्रविशारदः ॥१४॥ कोटिसूर्यप्रतीकाशो धारणाध्यानतत्परः ॥ आगतः स्वेच्छया भद्रं सर्वशोभायुतं भृगुः ॥ १५ ॥ दृष्ट्वा

१ विद्रुमोष्टावमात्यकाः ।

तं धूमदैत्योऽसौ प्रणम्य पर्यपूजयत् ॥ उवाच च प्रसन्नात्मा धन्यमद्य कुलं मम ॥ १६ ॥ इदं राज्यमियं लक्ष्मीर्धन्या त्वद्दर्शनान्मुने ॥ आज्ञां कुरु यथाशक्ति करवै तां भृगो मम ॥ १७ ॥ इत्युक्तस्तं मुनिः प्राह प्रार्थयन्तं स धूमकम् ॥ ॥ भृगुरुवाच ॥ नेक्षितस्त्वादृशो धूम दैत्यो देवातिथिप्रियः ॥ १८ ॥ आज्ञां देहि गमिष्यामि त्वदातिथ्यसुतोषितः ॥ अभिलाषो न कोऽप्यस्ति धूमार्थो मे जगत्त्रये ॥१९॥ शिव उवाच ॥ पुनर्नत्वाह धूमस्तं भृगो मे संशयं नुद ॥ ॥ धूम उवाच ॥ किं मया सुकृतं पूर्वं कृतं येनाभवन्मम ॥ २० ॥ अचला श्रीर्विभूतिश्च राज्यपुत्रादिसंपदः ॥ दैत्यवंशे जनिश्चैव शिवस्याराधने मतिः ॥ २१ ॥ भर्गभक्तप्रियत्वं च कुतो मे वद सांप्रतम् ॥ ॥ भृगुरुवाच ॥ पूर्वजन्मनि भो धूम राजा विकृतिसंज्ञकः ॥ २२ ॥ त्वमभूर्वेदवेदाङ्गस्मृतिशास्त्रार्थकोविदः ॥ नीतिज्ञो नीतिकुशलः सत्यसन्धश्च सत्यवाक् ॥ २३ ॥ हेमाङ्गदो हेमगदो मुकुटी कुण्डली बली ॥ अणिमादिर्गुणैर्युक्तो नित्यं धर्मपरायणः ॥ २४ ॥ अष्टादशद्वीपपतिर्द्युतिकान्तिसमन्वितः ॥ श्रिया परमया जुष्टः पूर्णकोशोऽमरप्रियः ॥ २५ ॥ ईश्वराराधने सक्तो मिलिन्दोऽब्जे यथा सदा ॥ अन्यत्कर्म न वेत्सि त्वमीश्वराराधनादृते

॥ २६ ॥ अश्वमेधास्तथा राजन्नेकोनशतसंख्यया ॥ सर्वान्मुनीन्समाहूय साङ्गाः संपादिताः पुरा
॥ २७ ॥ स्वपदच्युतिभीतोऽसौ सहस्रनयनस्ततः ॥ अन्यस्मिन्नकरोद्विघ्नं संप्रेष्य नारदं मुनिम् ॥ २८ ॥
वृद्धब्राह्मणरूपेण नारदो यज्ञमाययौ ॥ त्वयासौ पूजितो भक्त्या भार्यां ते समयाचत ॥ २९ ॥ दृष्ट्वा
पृष्टः कुलं शीलं नत्वा धाम च नाम च ॥ ॥ विकृतिरुवाच ॥ किं नाम किं स्थलं ब्रह्मन् वद मे त्वं
प्रसादतः ॥ ३० ॥ ॥ भृगुरुवाच ॥ इति पीत्वा गिरं तस्य प्रत्यूचे वृद्धभूसुरः ॥ ॥ वृद्ध उवाच ॥
पृथिव्यामाश्रमो मेऽस्ति शिवशर्मेति नाम च ॥ ३१ ॥ एतावतापि कालेन नोद्वाहो मेऽभवत्प्रभो ॥
दानशौण्डः समर्थोऽसि याजकश्च प्रियातिथिः ॥ ३२ ॥ यज्ञियावसरं ज्ञात्वा याचितुं त्वामुपागतः ॥
सर्वेषामाश्रमाणां च गार्हस्थ्यमुत्तमं प्रभो ॥ ३३ ॥ अतो मह्यमियं देया पत्नी रूपगुणान्विता ॥ ॥
विकृतिरुवाच ॥ ददे त्वां मत्प्रियां भार्यां ग्रहीष्ये तामहं पुनः ॥ ३४ ॥ दत्वा तद्वारतः स्वर्णमिति
मत्वा गृहाण ताम् ॥ ॥ वृद्ध उवाच ॥ अतिथिर्विमुखो यस्य याति तस्य जनुःकृतम् ॥ ३५ ॥
आदाय याति सुकृतं यज्ञे सप्तजनुःकृतम् ॥ अतो देया त्वया मह्यं भार्येयं चारुहासिनी ॥ ३६ ॥ इमा-

मादाय यास्यामि शास्त्रार्थान्वेद्मि तत्त्वतः ॥ अष्टापदेन किंचिन्मे नास्ति राजन्प्रयोजनम् ॥ ३७ ॥
स्वस्ति ते कुशलं चास्तु नो चेद्यामि महाप्रभो ॥ ॥ विकृतिरुवाच ॥ श्रेयोबुद्ध्या दीयमानं दानमित्य-
भिधीयते ॥ ३८ ॥ हठाल्लोभाद्भयाद्दत्तं तद्दानं चाधमं मतम् ॥ अन्यत्किंचित्त्वया याच्यं तद्दास्ये
भक्तिभावतः ॥ ३९ ॥ जिघृक्षुश्चेज्जवाद्ब्रूहि नो चेद्गच्छ यथासुखम् ॥ ॥ भृगुरुवाच ॥ इत्युक्तः स
मुनिः प्राह नायं धर्मस्तु सात्विकः ॥ ४० ॥ मया ते सत्वमालोकि प्रथमाश्रमवर्तिना ॥ वर्णाश्रमेषु
चान्यत्र वरो यो मुक्तिमार्गकृत् ॥ ४१ ॥ वासनाबद्धहृदयो न वर्णो नाश्रमो वरः ॥ यत्तमासुरभावेन
करोषि धर्ममुत्तमम् ॥ ४२ ॥ असुरो भवितासि त्वं विकृते चान्यजन्मनि ॥ अद्यापि न मयाऽयाचि
विकृते कोऽपि किंचन ॥ ४३ ॥ अद्यैव मानभङ्गो मे त्वया संपादितः खल ॥ ॥ भृगुरुवाच ॥
इत्युक्त्वा स मुनिः कोपात्तप्सो लोकं दहन्निव ॥ ४४ ॥ उत्कृत्य कुण्डं पात्राणि भित्त्वा चान्तर्दधे प्रभो ॥
इति ते कथितो धूम वृत्तान्तः पूर्वसंभवः ॥ ४५ ॥ अतो राज्यं च लक्ष्मीश्च दैत्यजन्म च तेऽभवत् ॥

शिव उवाच ॥ इत्युक्त्वा स भृगुर्धूममाशीर्भिरनुगृह्य च ॥४६॥ स्तूयमानश्च तेनाथ तत्रैवान्तर्हितोऽभवत् ॥४७॥ इति श्रीस्कन्दपुराणे वैनायके माहात्म्ये भृगुसंवादवर्णनं नाम एकोनविंशोऽध्यायः ॥१९॥ ॥

शिव उवाच ॥ अथ तस्मिन्पुरे स्कन्द क्षत्रियो माधवाभिधः ॥ रूपवान्धनसंपन्नः पुत्रहीनः सुदुःखितः ॥ १ ॥ पुराणश्रवणासक्तो ब्रह्मज्ञानपरः शुचिः ॥ सुमदा च प्रिया तस्य शरच्चन्द्रनिभानना ॥ २ ॥ व्रतदानतपोयज्ञैः पुत्रार्थं यतते स्म सः ॥ नाभूत्पुत्रोऽनेकयत्नैस्तस्याथ चिन्तया जगौ ॥ ३ ॥ ॥ ॥ माधव उवाच ॥ कर्मणां फलदाता यः स ईशः कुत्र तिष्ठति ॥ किंनु पूर्वं कृतं कर्म मया पुत्रप्रबन्धकम् ॥ ४ ॥ ॥ शिव उवाच ॥ इति चिन्तातुरः कोपान्माधवः स्त्रियमब्रवीत् ॥ ॥ माधव उवाच ॥ रूपलावण्यसौभाग्यसर्वसंपद्युता प्रिया ॥५॥ वन्ध्या वन्द्या जनैः सर्वैः सा वृथाजनिरङ्गना ॥ तवास्यदर्शनात्कान्ते संतापो जायते मम ॥ ६ ॥ वनवासे च वैराग्ये प्राणत्यागे मतिस्तथा ॥ कथंनु बिभृषे प्राणान्वन्ध्ये त्वं हा न लज्जसे ॥ ७ ॥ अद्यप्रभृति नैवास्यं दर्शनीयं त्वया मम ॥ ॥ शिव उवाच ॥ इत्युक्ता सुमदा तेन माधवेन रुषा तदा ॥ ८ ॥ पपात मूर्छिता भूमौ वाग्वज्रनिहताऽबला ॥

सस्मार पितरौ देवान् हा हतास्मीति चाब्रवीत् ॥९॥ जगलुर्भूषणान्यस्या हारयष्टिः पपात ह ॥ शुशोच
बहुधा स्कन्द रुरोद च पुनः पुनः ॥ १० ॥ निरगाद्वनवासाय सुमदा दृढमानसा ॥ ध्यायन्ती परमं
धाम योगिगम्यं सनातनम् ॥ ११ ॥ ऋक्षशार्दूलसिंहेभवृकैर्व्याघ्रमृगैर्युते ॥ अदृष्टपूर्वे मनुजैः कान्तारे
ऽदृश्यभानुनि ॥ १२ ॥ तत्र सा न्यवसद्दीना निराहारा जितेन्द्रिया ॥ मर्त्यभावमतीता सा स्थाणुवत्सं-
स्थिताभवत् ॥ १३ ॥ वल्मीकं ववृधे तस्या देहे चर्मास्थिशालिनि ॥ एवं द्वादश वर्षाणि नारायणपरा
सती ॥ १४ ॥ न स्नानं न जपं निद्रां न चाहारमकुर्वती ॥ ध्यायन्ती माधवं भक्त्या तपस्तेपे सुदारु-
णम् ॥ १५ ॥ सुप्रीतस्तपसा चास्याः प्रत्यक्षं पुरतः स्थितः ॥ शङ्खं चक्रं गदां पद्मं मुकुटं कुण्डले दधत्
॥ १६ ॥ वल्मीककलुषगात्रां तां पश्यति स्म रमापतिः ॥ तद्दर्शनसुधास्पर्शाद्दिव्यदेहा बभूव सा ॥ १७ ॥
अवदत्परमात्मानं नत्वा स्तुत्वा यथामति ॥ ॥ सुमदोवाच ॥ संसाराब्धौ निमग्नां मामुद्धराशु
जगत्प्रभो ॥ १८ ॥ भर्त्रा निर्भर्त्सिता चाहमनपत्या वनं गता ॥ ऋक्षाद्या अपि मां नाथ जघ्नुर्न वन-
मध्यगाम् ॥ १९ ॥ कियन्तो दिवसा विष्णो गता मेऽत्र न वेद्मि तान् ॥ प्रसादं कुरु मे देव इदानीं

करुणानिधे ॥ २० ॥ ॥ शिव उवाच ॥ इत्युक्तः परमात्मा तां वरं ब्रूहीति चाब्रवीत् ॥ ततः सा सुमदा विष्णुं वव्रे तं वरदं विभुम् ॥ २१ ॥ ॥ सुमदोवाच ॥ भवादृशो भवेत्पुत्रो यदि मे सांप्रतं प्रभो ॥ तदेदं वदनं देव दर्शयिष्यामि तं पतिम् ॥ २२ ॥ नोचेदत्रैव गच्छन्तु प्राणा मे निर्जने वने ॥ शिव उवाच ॥ पुनः प्रोवाच तां विष्णुः पुत्रोऽस्मि भविता तव ॥ २३ ॥ इत्युक्त्वाऽभयहस्तं च धृत्वा तन्मस्तके हरिः ॥ अन्तर्हितोऽथ सा हर्षात्सस्मार निजमन्दिरम् ॥ २४ ॥ अथ सा सुमदा स्कन्द बभूव भयविह्वला ॥ स्मरन्ती वैष्णवं रूपं यद्दृष्टं पुरतः स्थितम् ॥ २५ ॥ पश्यन्ती काननं घोरं करुणं पर्यदेवयत् ॥ ॥ सुमदोवाच ॥ अहो मोहो महाञ्शत्रुः संसारगहनेऽखिलात् ॥ २६ ॥ वासनासचिवो जन्तून्प्रक्षिपत्येव सर्वदा ॥ धारणाध्यानयुक्तानां प्रत्याहाररतात्मनाम् ॥ २७ ॥ योगिनां लक्ष्यतामेति जनुर्भिर्बहुभिस्तु यः ॥ दृष्टोऽपि स्वल्पकालेन मया दृष्टोपि किंचन ? ॥ २८ ॥ पुरःपद्यां कथं वेद्मि कोनु मे तां वदिष्यति ॥ ॥ शिव उवाच ॥ विचिन्त्यैवं तदा सुभ्रूरन्वियेषाथ पद्धतिम् ॥ २९ ॥ भ्रमन्त्या ददृशे पन्थास्तेन सा पुरमाययौ ॥ दूरान्नागरिकैर्दृष्टा द्योतयन्ती दिशो दश ॥ ३० ॥ ॥ नागरिका

ऊचुः ॥ द्वादशादित्यपुञ्जोऽयं किंनु वा प्रबलोऽनलः ॥ स्वर्लोकात्पतितः किंनु चन्द्रो वारिष्टमागतम्
॥ ३१ ॥ ॥ शिव उवाच ॥ वितर्क्यैवं पुरो जग्मुर्ज्ञात्वा माधवयोषितम् ॥ पप्रच्छ कुशलं भर्तुः प्रेक्ष्य
लोकान्नृपस्य च ॥ ३२ ॥ त ऊचुरुभयोः क्षेमं ग्रामवासिजनस्य च ॥ राजानं केचिदाचख्युर्माधवं
केचनाब्रुवन् ॥ ३३ ॥ कोलाहलोऽभवद्ग्राम आगता सुमदेति च ॥ राजा स्वसेनया लोका ययुश्च पुर-
वासिनः ॥ ३४ ॥ तेजसा व्याप्तदिग्भागां द्रष्टुं ता सुमदां तदा ॥ आगतां द्वादशाब्देन तपस्तेजस्विनीं
नृपः ॥ ३५ ॥ कृत्वा विधिं च पूजां च शंकरस्य शुभावहाम् ॥ पूजयित्वा ददौ तस्यै वस्त्राण्या-
भूषणानि च ॥ ३६ ॥ प्रेषयित्वा नृयानं च माधवं तत्र चानयत् ॥ तां च तत्रोपवेश्याथ सर्वे ते विवि-
शुः पुरम् ॥३७॥ गीतवादित्रनिर्घोषैः सह बन्दिजनैर्मुदा ॥ स्वं स्वं धाम गताः सर्वे राज्ञा तौ प्रेषितौ
गृहम् ॥ ३८ ॥ सुमदामाधवौ सर्वान्विसृज्य सुहृदस्तथा ॥ उपविश्यासने रम्ये वार्तां तौ चक्रतुर्मुदा
॥३९॥ पप्रच्छ माधवः पत्नीं स्ववृत्तान्तं वदस्व मे ॥ इति भर्तुर्वचः श्रुत्वाऽऽचचक्षे सुमदा तदा ॥ ४०॥
॥ ॥ सुमदोवाच ॥ श्रुत्वा तव वचो भर्तर्मा मुखं दर्शयेति माम् ॥ तस्मिन्नेव दिने स्वामिन्यातांहं

गहनं वनम् ॥ ४१ ॥ चिन्तयन्ती परं नाथं ज्योतिर्नारायणाभिधम् ॥ स्थिता पद्मासने तावद्यावन्नारायणो मम ॥ ४२ ॥ प्रत्यक्षं पुरतस्तस्थौ वरं याचेति चाब्रवीत् ॥ मया स याचित इति देहि पुत्रं भवादृशम् ॥४३॥ उक्तवान्सोऽहमेवास्मि पुत्रस्ते भवितानघे ॥ ततः सोऽन्तर्हितश्चाहं कृच्छ्रात्पुरमथागता ॥४४॥ ॥ शिव उवाच ॥ इति श्रुत्वा प्रियावाक्यं माधवो विस्मितो हृदि ॥ अथ स्वल्पेन कालेन ससत्वा सुमदाऽभवत् ॥ ४५ ॥ आननन्द च सा सुभ्रूर्माधवोऽपि निरीक्ष्य ताम् ॥ एवं तौ महिपावत्यां तस्थतुर्धर्मचारिणौ ॥ ४६ ॥ इति श्रीस्कन्दपुराणे सुमदामाधववर्णनं नाम विंशतितमोऽध्यायः ॥२०॥

॥ ॥ शिव उवाच ॥ अथ धूमः शरत्काले विजयाय प्रतस्थिवान् ॥ आत्मजैश्च चतुर्भिश्च प्रधानैरष्टभिः सह ॥ १ ॥ अन्यैः सेनाचरवरैः सरथेभाश्वपत्तिभिः ॥ चतुरङ्गचमूमध्ये शुशुभे स महीपतिः ॥ २ ॥ सप्तव्यूहा ययौ सेना यथा सप्त महाब्धयः ॥ गच्छन्राजाभिशुश्राव स्ववाणीमिति षण्मुख ॥ ३ ॥ सुमदाया भवेत्पुत्रः स राजानं हनिष्यति ॥ इति श्रुत्वा गिरं धूमो निपपातान्तरिक्षजाम् ॥ ४ ॥ चक्रुः कोलाहलं सर्वे धूमे राजनि मूर्छिते ॥ अमात्याश्चैव पुत्रास्तं रथमारोपिरे पुनः ॥ ५ ॥ परावृत्य

पुरं जग्मुः प्रयत्नैः परमैरपि ॥ अवधानं गतो धूमः शुशोच बहुधा तदा ॥ ६ ॥ ॥ धूम उवाच ॥
हा हतोऽस्मि गतं राज्यं लुप्तं भाग्यमतः परम् ॥ पुत्रानेतान्क्व पश्यामि प्रधानांश्चापि सैनिकान् ॥७॥
उक्तं येनेदृशं वाक्यं हन्यां तं वाद्य निश्चितम् ॥ किंनु वा माधवं हन्यां तत्प्रियां सुमदामुत ॥ ८ ॥
क्व यामि किं करोम्यद्य कथं जीवामि चेश्वर ॥ ॥ शिव उवाच ॥ इति शोचन्तमालोक्य धर्ममूर्ति-
रभाषत ॥ ९ ॥ ॥ धर्ममूर्तिरुवाच ॥ अस्ति नाशो महेन्द्रस्य स्वर्लोके च प्रजापतेः ॥ मृत्युलोके
विशेषेण सर्वेषां प्राणिनां विभो ॥ १० ॥ अर्थं चिन्तय चानर्थं राज्यं स्वप्नमिवापरम् ॥ नानर्थं चिन्तये-
द्धूम भाविनं यो विचक्षणः ॥११॥ तथ्याऽतथ्या नु सा वाणी स्यात्कदा वेद तां नु कः ॥ सावधानमना-
स्तस्माद्भवस्वामिन्रिपुं जय ॥ १२ ॥ ॥ शिव उवाच ॥ श्रुत्वावधानं संप्राप्तो धर्ममूर्तेरुदीरितम् ॥
विससर्जाखिलान्लोकान्धूमो विद्रुममब्रवीत् ॥ १३ ॥ धर्ममूर्तिर्विद्रुमश्च धूमो मन्त्रममन्त्रयन् ॥ एकान्ते
वेदिकामध्ये शुशुभुस्तेऽग्नयो यथा ॥ १४ ॥ षडमात्याश्चतुःपुत्रा आगता वेदिकामथ ॥ अथ धूमोऽव-
दत्सर्वाञ्छृणुध्वं चैकमानसाः ॥ १५ ॥ ॥ धूम उवाच ॥ सुमदाया भवेत्पुत्रः स राजानं हनिष्यति ॥

इत्यश्रावि मया वाक्यं गच्छताऽकाशसंभवम् ॥१६॥ असत्या न नभोवाणी जातामात्या नच श्रुता ॥
भिन्नं हृन्मे तया वाचा दुःखं जातमतोऽद्भुतम् ॥ १७ ॥ ब्रूतेदानीं विचारं मे तं करिष्ये जवादहम् ॥
॥ ॥ चिन्तामणिरुवाच ॥ दशदिग्जयिनो धूम तव जेता भवेन्नु कः ॥ १८॥ कदा नूत्पद्यते बालः
प्राणेदुत्पत्तिमान्कथम् ॥ कथमेधेत जीवन्स वृद्धो हन्यात्कथं नु ते ॥१९॥ एकाकी सर्ववीराणामधिपं
गजवाजिनाम् ॥ त्यक्त्वा चिन्तां च दुःखं च कुरु राज्यमकण्टकम् ॥ २० ॥ ॥ शिव उवाच ॥ श्रुत्वा
चिन्तामणेर्वाक्यं धर्ममूर्तिरथाब्रवीत् ॥ ॥ धर्ममूर्तिरुवाच ॥ ब्रह्मज्ञानविचारोऽयं राजनीत्यां न शोभते
॥ २१ ॥ समूलान्मानिनोऽहत्वा सपत्नान्नोदयः क्वचित् ॥ प्राप्नुवन्ति यथा तेजोऽसंनिहत्याखिलं तमः
॥ २२ ॥ उदयं प्राप्स्यमानौ द्वौ नोपेक्ष्यौ रोगवैरिणौ ॥ इच्छता पथ्यमात्मीयं यत उक्तावुभौ समौ
॥ २३ ॥ ॥ शिव उवाच ॥ विक्रमोऽथाब्रवीत्तत्र सर्वेषां शृण्वतां वचः ॥ ॥ विक्रम उवाच ॥ ज्ञानं[1]
यस्य समाख्यातं धर्ममूर्तेर्मया नृप ॥ २४ ॥ उक्तं सम्यग्राजनीत्यां परमत्र न शोभते ॥ योऽनिशं

१ अज्ञाप्यस्य समाकूतं इति पाठः ।

परमात्मानं सर्वारिष्टनिवारकम् ॥ २५ ॥ चिन्तयेत्तस्य कोऽनिष्टं कर्तुमीशो भवेन्नरः ॥ यस्यास्त्यनुग्रहः
स्वामिन्विष्णोर्वा शंकरस्य च ॥ २६ ॥ इत्थं यस्याशुभं यस्तु स्वयं तत्प्राप्नुयात्कुधीः ॥ अतो न निधनं
स्वामिन्सुमदाया विचिन्तयेत् ॥ २७ ॥ उक्तं नारायणेनास्याः स्यामहं तव बालकः ॥ अवतीर्णस्य
तस्यात्र द्रष्टव्यः परमो महः ॥ २८ ॥ वाचामगोचरो यस्तु द्रक्ष्यामस्तं सुचक्षुषा ॥ वक्ता योऽखिलवि-
द्यानां तेन साकं वदाम च ॥ २९ ॥ स्याम मुक्ता इहैनोभिर्मुक्तिमन्ते भजाम च ॥ विनापराधं सो
हन्यात्कथं धूम कुतश्च ते ॥ ३० ॥ ॥ शिव उवाच ॥ इति विक्रमवाक्यान्ते विपुलोऽथ रुषा जगौ
॥ ॥ विपुल उवाच ॥ पराक्रमेण हीनो यो विक्रमं संप्रचक्षते ॥३१॥ स च वक्ति तथा राजन्वैराग्यं
येन जायते ॥ वीराणामभिमानेन कीर्तिरत्राभिजायते ॥ ३२ ॥ परत्र च तथा स्वर्गो दिव्यभोगसम-
न्वितः ॥ शूराणां राजनीत्यां च कुशलानां महीभृताम् ॥ ३३ ॥ मृगयायां तथा वैरिवधे पापं न
विद्यते ॥ कियन्तो निहता वीरास्त्वया राजन्रणे रणे ॥ ३४ ॥ विष्णुमायां न जानन्ति ब्रह्मेन्द्रेशादयः
सुराः॥ अतो नोपेक्षणीयोऽसौ गर्भो माधवयोषितः ॥ ३५ ॥ ॥ शिव उवाच ॥ अथासौ महिपावत्याः

पतिरूचे प्रसन्नधीः ॥ ॥ धूम उवाच ॥ ज्ञानमज्ञायि ते सम्यङ्मया विपुलनीतिजम् ॥ ३६ ॥ अयमेव विचारोऽद्य संपाद्यः सर्वथैव हि ॥ ॥ शिव उवाच ॥ अनुमेनेऽथ राजानं संपातिरतिवादिनम्॥३७॥ अवादीद्बुद्धिमांस्तस्य ज्ञात्वाधूमस्य निश्चयम् ॥ विपुलस्यापि संपातेरैकमत्यं च षण्मुख ॥ ३८ ॥ बुद्धिमानुवाच ॥ उच्यते ह्यखिलैः सम्यङ्न्चाभात्युचितं मम ॥ मायां विष्णोर्न जानासि यदि हन्ता स ते भवेत् ॥ ३९ ॥ हन्यादेव त्वया यत्ने कृते नानाविधेऽपि च ॥ अन्यदेकं वदे राजंस्तच्छृणुष्वावधानतः ॥ ४० ॥ स्त्रीहत्या बहुधा निन्द्या न कर्तव्या कदाचन ॥ हितमेवं विजानामि स्वमत्या ते नराधिप ॥ ४१ ॥ अन्योक्तं सुहितं चेत्स्यात्तत्कुरुष्व यथामति ॥ ॥ शिव उवाच ॥ अथाह पुत्रो धूमस्य हन्यतां सुमदेति च ॥ ४२ ॥ एवं सर्वमतं ज्ञात्वा विसृज्य संसदं नृपः ॥ प्रविवेश निजं सद्म यातेऽस्तं तिग्मतेजसि ॥ ४३ ॥ इति श्रीस्कन्दपुराणे वैनायके विचारवर्णनं नामैकविंशोऽध्यायः ॥ २१ ॥ ॥ ॥ स्कन्द उवाच ॥ किमकारि ततः शंभो तेन धूमेन शोचता ॥ परस्परविरुद्धानि श्रुत्वा वाक्यानि संसदि ॥ १ ॥ ॥ शिव उवाच ॥ शृणुष्वावहितः स्कन्द यत्पृष्टोऽहं त्वयानघ ॥ यत्कृतं तेन धूमेन

तदशेषं वदामि ते ॥ २ ॥ निशीथे संप्रवृत्ते तु धूम आहूय विद्रुमम् ॥ सेनापञ्चशतीर्दत्वा प्रेषयामास सत्वरम् ॥ ३ ॥ अजिज्ञपच्च तं स्कन्द हत्वा तां सुमदां जवात् ॥ तावदेहि महाबुद्धे यावन्नोदेति भास्करः ॥४॥ इत्याज्ञां शिरसा तस्य वन्द्य स्कन्द स विद्रुमः ॥ आदाय पृतनां सार्धं सुमदागृहमाययौ ॥ ५ ॥ शनैरेकः शनैरेको भंक्त्वा तोरणमोजसा ॥ आगच्छदेवं सर्वेपि यातास्तस्या गृहाजिरम् ॥ ६ ॥ भंक्त्वा गृहकपाटं स चतुर्भिः सह विद्रुमः ॥ ददर्श सुमदां सुप्तां पर्यङ्के पतिना सह ॥ ७ ॥ उत्थापयित्वा पल्यङ्कं चतुर्भिर्लाघवेन तम् ॥ आनिनाय वनं घोरं सेनया सह विद्रुमः ॥ ८ ॥ उत्तारयित्वा पल्यङ्कं विद्रुमो वृक्षसंविधौ ॥ चिन्तया परया व्याप्तः करुणावाक्यमब्रवीत् ॥ ९ ॥ ॥ विद्रुम उवाच ॥ कथमेतामहं हन्यां सुप्तां सत्ववतीं स्त्रियम् ॥ निद्राभङ्गो न कर्तव्यः प्राणिनां सुखशायिनाम् ॥ १० ॥ तथापि प्रबलामाहू राज्ञामाज्ञां विचक्षणाः ॥ ॥ शिव उवाच ॥ खिद्यन्तमेवं दृष्ट्वान्ते खिद्यन्वीराश्च विद्रुमम् ॥ ११ ॥ जजागाराथ सा सुभ्रूर्वदत्येवं तु विद्रुमे ॥ सापि दृष्ट्वा महारण्यं सेनां तामभितः स्थिताम् ॥ १२ ॥ सुप्तं च स्वामिनं वीरं सदयं चेदमब्रवीत् ॥ ॥ सुमदोवाच ॥ अयं धर्म-

रतो नित्यं सत्यभाषी जितेन्द्रियः ॥ १३ ॥ परमर्म परद्रोहं परनिन्दां न वेत्ति च ॥ वीरः शूरोऽप्यस-
च्छत्रुभर्ता मे माधवो बली ॥ १४ ॥ अहमस्मादृते चित्ते देवानपि न चिन्तये ॥ वने च द्वादशाब्दानि
देवं भर्तृस्वरूपिणम् ॥ १५ ॥ अस्यैव वर्ष्मणा नित्यं ध्यायन्ती माधवं विभुम् ॥ आवाभ्यां रचितं केन
कर्मैवं दुष्टबुद्धिना ॥ १६ ॥ किंनु दर्शयते मायां विभुर्मे जठरेशयः ॥ किंनु वा स्वप्न एवायं दृश्यते
सुचिरं मया ॥ १७ ॥ सुप्ताहं सुसुखं भर्त्रा सह मध्ये गृहे निशि ॥ सुपर्यङ्केऽथ केनाहमानीता घोरका-
ननम् ॥ १८ ॥ ॥ शिव उवाच ॥ एवमुक्त्वाथ सुमदा निशि पर्यङ्कवासिनी ॥ पतिमुत्थापयामास
धृत्वा धैर्यं स्वचेतसि ॥ १९ ॥ ॥ सुमदोवाच ॥ उत्तिष्ठोत्तिष्ठ जीवेश शेषे शेषेऽनिशं कथम् ॥ पश्या-
रिष्टं महत्स्वामिन्केनेदं कर्मणागतम् ॥ २० ॥ ॥ शिव उवाच ॥ उत्तस्थौ माधवः श्रुत्वा वाक्यं
यत्सुमदेरितम् ॥ पश्यति स्माखिलां सेनामरुणोदयदीपिताम् ॥ २१ ॥ उत्थिते माधवे स्कन्द विद्रुम-
स्तामथाब्रवीत् ॥ ॥ विद्रुम उवाच ॥ शृणुष्व सुमदे मातः राज्ञा मे कथितं तु यत् ॥ २२ ॥ श्रुतवा-
ञ्जययात्रायै गच्छन्धूमो नभोगिरम् ॥ सुमदाया भवेत्पुत्रः स राजानं हनिष्यति ॥ २३ ॥ श्रुत्वैवं

वचनं धूमो मूर्च्छितः पतितो रथात् ॥ प्रविश्य नगरं पश्चादमात्यैः संविचार्य च ॥ २४ ॥ मामाहूय निशीथे स जह्वाह सुमुदामिति ॥ इति राज्ञो वचः श्रुत्वा धूमस्य क्रूरचेतसः ॥२५॥ आनीतासि वने घोरे हन्तुं त्वां निबिडे शुभे ॥ ॥ शिव उवाच ॥ इति विद्रुमवाक्यान्ते शुशोच च मुमूर्छ सा ॥२६॥ सुमदोवाच ॥ हा देव हा जगद्योने हा विष्णो हा जगत्पते ॥ किमर्थमभवः पूर्वमपरोक्षो मम प्रभो ॥२७॥ कथं नु प्रापयेद्दीनां प्रसादान्मां निजं पुरम् ॥ तदैव न हता कस्माद्वृकव्याघ्रादिभिर्वने ॥ २८॥ इदानीं सह भर्त्रा मे निधनं समुपस्थितम् ॥ अन्यं न चेतसा ध्यातं कैटभारे रमापते ॥ २९ ॥ त्वामस्मि शरणं प्राप्ता नारायण दयानिधे ॥ अनुकम्पय मां पुत्रलालसां पतिना सह ॥ ३० ॥ इति सा करुणं शोकं कृत्वा विद्रुममाह तम् ॥ ॥ विनागांसि न हिंसन्ति प्राणिनो धर्मचारिणः ॥ ३१ ॥ बिभ्राणय मम प्राणांस्त्वमेव करुणां कुरु ॥ उपकारात्परो धर्मो नान्योऽस्ति जगतीतले ॥ ३२ ॥ परोपकृतये पूर्वं दधीचिर्निधनं गतः ॥ किमर्थं भ्रमते सूर्यो हन्ति दैत्यानजः कुतः ॥ ३३ ॥ अत आगोविना मां त्वं कथं विद्रुम हंसि च ॥ पुत्रार्तां गर्भिणीं शान्तां क्षत्रियस्यापि योषितम् ॥ ३४ ॥ संकटे च विवाहार्थे

परत्राणे विपत्सु च ॥ वदन्त्यनृतवाक्यानि अपि सत्यव्रता नराः ॥ ३५ ॥ उद्धरन्ति नरव्याघ्र ते कुलान्येकविंशतिः ॥ तद्गच्छ वद राजानं सा हतेति च विद्रुम ॥ ३६ ॥ तुष्टाहमन्यथा कुर्यां भस्मसात्त्वां ससैनिकम् ॥ ॥ शिव उवाच ॥ आकर्ण्य सुमदोक्तां च ब्राह्मीं तां विद्रुमः पुनः ॥ ३७ ॥ अवदद्राजनीतिज्ञः परतन्त्रः प्रतापवान् ॥ ॥ विद्रुम उवाच ॥ अन्यथा यदि क्रियेत राज्ञ आज्ञा शुभानने ॥३८॥ हन्यान्मां सकुलं धूमोऽविचार्यैवं दुराशयी ॥ ॥ शिव उवाच ॥ इति सा वचनं श्रुत्वा सुमदा विद्रुमेरितम् ॥ ३९ ॥ नैराश्यं परमं प्राप्ता सस्मार वरदं विभुम् ॥ ददर्श स्मरणात्तस्य वीरान्नानास्वरूपिणः ॥४०॥ शस्त्रास्त्रपाणयो जघ्नुर्नदन्तस्तां वरूथिनीम् ॥ अनेकशोऽनेकरूपान्निघ्नतो नॄन्समीक्ष्य तान् ॥ ४१ ॥ पपाल विद्रुमः सार्धं सेनया जीवनेच्छया ॥ हाहा कृत्वा प्रधावन्तः प्रास्खलन्केपि सैनिकाः ॥ ४२ ॥ एवं ते महिपावत्यां प्रविष्टा विस्मिता भृशम् ॥ अपश्यन्तोऽथ तान्वीरान्लज्जिताश्च परस्परम् ॥ ४३ ॥

इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये विद्रुमपलायनं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥

॥ शिव उवाच ॥ ॥ अथ विद्रुममाहूय धूमः पप्रच्छ तं पुनः ॥ किमर्थं शुष्कवदन आगतः से-

नया सह ॥ १ ॥ कृत्वा कार्यस्य नाशं वा सिद्धिं वा वद विद्रुम ॥ श्रुत्वा धूमवचो व्रीडाधोमुखो विद्रुमोऽब्रवीत् ॥ २ ॥ ॥ विद्रुम उवाच ॥ आज्ञया तव हन्तुं तां गतास्म सुमदां विभो ॥ दृष्टौ सुखशयौ धूम मञ्चके दम्पती मया ॥ ३ ॥ उत्थापयित्वा पर्यङ्कं चतुर्भिर्लाघवेन तम् ॥ आनीतौ गहनं घोरं हन्तुं यावद्यते तु ताम् ॥ ४ ॥ स्मरन्ती सघृणं देवं शङ्खचक्रगदाधरम् ॥ विभुं नारायणं चित्ते तावत्स ससृजे भटान् ॥ ५ ॥ किंनु नारायणो देवो नानारूपस्तदाभवत् ॥ निर्ममे मायया किंनु तान्वीराञ्छतशो बली ॥६॥ निजघ्नुः सहसा तेऽस्मान्नदन्तो निर्दयं प्रभो ॥ वयं तत्पुरतः स्थातुमनीशा जीवनेच्छया ॥ ७ ॥ प्राणशेषा जवाद्याताः पलाय्य नगरं विभो ॥ लज्जयाधोमुखीभूता अपश्यन्तः पुनश्च तान् ॥ ८ ॥ ॥ शिव उवाच ॥ वदन्तं तं जघानैवं धूमः खड्गेन विद्रुमम् ॥ स्वयं च म्लानवदनो निरुत्साहोऽभवत्तदा ॥ ९ ॥ ताडितं विद्रुमं दृष्ट्वा राजानं रुष्टमानसम् ॥ सनूचे हृदि संतप्तं धूमं मौनेन संस्थितम् ॥ १० ॥ ॥ सनुवाच ॥ बुद्ध्या संवर्तयेद्धीमान्बुद्ध्या कार्यं प्रसाधयेत् ॥ बुद्ध्या निर्वाहयेत्सर्वं गाम्भीर्यौदार्यशौर्यवान् ॥ ११ ॥ उद्योगः सर्वथा कार्यो धूम नानाविधः पुरा ॥

दिष्टमालम्ब्य मौनेन न तिष्ठन्ति हि बाहुजाः ॥ १२ ॥ तस्मात्कुरु वचो मेऽद्य यदि हृद्यं भवेत्तव ॥ सुमदायाः स्थले दिक्षु चतसृष्वपि रक्षकान् ॥ १३ ॥ संस्थाप्य सा यदा सूते तदैव हन्यतां शिशुः ॥ ॥ शिव उवाच ॥ उक्तं तेन सता धूमो निशम्य च जहर्ष च ॥ १४ ॥ अनुमेनेऽथ संपाती राजा धूमश्च तद्वचः ॥ तावादिदेश धूमोऽसावावाभ्यां यदुदीरितम् ॥ १५ ॥ तत्तथैव च कर्तव्यं यथा न ज्ञायतेऽखिलैः ॥ श्रुत्वाज्ञां धूमदैत्यस्य चक्रतुस्तौ यथामति ॥ १६ ॥ संस्थितावुभयोर्द्वारोः संपातिश्चापि संस्तदा ॥ पश्चिमे चैव पूर्वे च गुप्तौ राजहिते रतौ ॥ १७ ॥ दक्षिणोत्तरतश्चापि स्थापितौ सेवकौ तदा ॥ विश्वास्यावात्मतुल्यौ तौ काङ्क्षमाणौ शिशोर्जनिम् ॥ १८ ॥ ॥ स्कन्द उवाच ॥ सुमदामाधवौ शंभो तदा किं तत्र चक्रतुः ॥ उत्पन्नो बालकः कीदृक् किमकुर्वत रक्षकाः ॥ १९ ॥ वदेदं कृपया देव पृच्छन्तं मां समासतः ॥ ॥ शिव उवाच ॥ दत्त्वा मनः शृणु स्कन्द वदे प्रश्नोत्तरं तव ॥ २० ॥ सुमदामाधवौ पुत्र तत्रैव तस्थतुर्वने ॥ कन्दमूलफलाहारौ शोकदुःखसमन्वितौ ॥ २१ ॥ ततः सा सुमदा स्कन्द प्रासूत शिशुमुत्तमम् ॥ तेजसा दीप्तसर्वाङ्गं मुक्तामणिविभूषितम् ॥ २२ ॥ रक्ताङ्गं श्वेतवसनं

चतुर्बाहुं त्रिलोचनम् ॥ मुकुटेन भ्राजमानं कर्णकुण्डलधारिणम् ॥ २३ ॥ धारिणं भालचन्द्रं च कमलं परशुं तथा ॥ मोदकान्भक्षयन्तं च मालया चारु शोभितम् ॥ २४ ॥ शूर्पकर्णं विशालाक्षं विस्तीर्णवक्षसं प्रभुम् ॥ दृष्ट्वा तं पुरुषश्रेष्ठमुभौ तौ प्रापतुर्मुदम् ॥ २५॥ सा विष्णोर्वचनं तथ्यं तदा मेने सुमध्यमा ॥ अथ तां सुमदां देवो बभाषे बालरूपधृक् ॥ २६ ॥ ॥ भालचन्द्र उवाच ॥ मया ते विष्णुरूपेण दत्त आसीद्वरः पुरा ॥ सोऽधुना पुत्रतामेत्य समपादि शुभानने ॥ २७ ॥ रक्षितासि वने घोरे स्मृतिमात्रेण सुन्दरि ॥ त्रिलोकीकण्टकं धूमं हत्वा यास्ये निजं स्थलम् ॥२८॥ अन्यस्ते भविता पुत्रः शोकदुःखभयापहः ॥ पिता मे माधवः सुभ्रूर्माता त्वं सुमदेति च ॥ २९ ॥ इह भुक्त्वाऽखिलान्भोगानन्ते मुक्तिं गमिष्यथः ॥ इदानीमेव धूमोऽसौ हन्तुं मामुपयास्यति ॥ ३० ॥ मत्तः स निधनं प्राप्य परमं धाम यास्यति ॥ ॥ शिव उवाच ॥ बालेन भालचन्द्रेण प्रोक्तं सा सुमदा तदा ॥ ३१ ॥ आकर्ण्य संशयं प्राप्ता वचसा तस्य चेतसि ॥ सर्वज्ञो बुबुधे बालस्तस्यास्तं संशयं प्रिय ॥ ३२ ॥ प्रसार्य वदनं तस्थौ निरुच्छ्वासश्च निष्क्रियः ॥ अथ सा व्याकुलीभूता पश्यति स्मादरान्मुखम् ॥ ३३ ॥ मुखान्तर्-

दृशे चास्य तयाष्टौ वसवस्तथा ॥ इन्द्राश्च मनवश्चैव चतुर्दश सपन्नगाः ॥ ३४ ॥ पर्वताः सरितो यक्षाः समुद्राः काननानि च ॥ ऋषयो देवगन्धर्वा भुवनानि चतुर्दश ॥३५॥ सुमदा स्कन्द तद्दृष्ट्वा विस्मयं परमं ययौ ॥ हृच्छयं संशयं त्यक्त्वा स्तनपानं ददौ शिशुम् ॥ ३६ ॥ ततः स गर्जनां चक्रे पीत्वा मातुः स्तनात्पयः ॥ श्रुत्वा तद्गर्जनां स्कन्द रक्षकास्तत्र तेऽमिलन् ॥ ३७ ॥ धूमं शशंसुर्गत्वाथ बिभ्युः पेलुश्च केचन ॥ आसने सुखमासीनं दूता धूममथाब्रुवन् ॥ ३८ ॥ ॥ दूता ऊचुः ॥ प्रसूता सुमदा धूम पुत्रं जज्ञे दुरासदम् ॥ श्रुत्वा तद्गर्जनं भीता वयं याता निवेदितुम् ॥ ३९ ॥ ॥ शिव उवाच ॥ श्रुत्वा दूतवचो धूमो मुमूर्च्छ भृशदुःखितः॥ बोधितः सकलैरेत्य प्रधानैर्दुःखितोऽसुरः ॥ ४० ॥ उत्थाय सहसा धूमश्चण्डशब्दमथाकरोत् ॥ गृहीत्वा शस्त्रसङ्घांश्च ययौ तद्गहनं वनम् ॥ ४१ ॥ सैनिकैश्च प्रधानैश्चानुयातो धूमदैत्यराट् ॥ प्रापुस्ते विस्मयं गत्वा दृष्ट्वा तं बालकं विभुम् ॥ ४२ ॥ उद्दिश्य बालकं धूमस्तत्याज शस्त्रमुत्तमम् ॥ तावद्दध्रे महद्रूपं बालकः स्वेच्छया तदा ॥ ४३ ॥ व्यादाय वदनं धूमं तत्याज जठरे रयात् ॥ गते धूमे सहामात्यैः सैनिकास्ते रसातलम् ॥ ४४ ॥ विविशुर्देवताः सर्वा जये-

त्युक्त्वा प्रतुष्टुवुः ॥ अवाकिरंश्च कुसुमैर्विभुं देवं मुदा तदा ॥ ४५ ॥ आगता ऋषयोऽपूजन्नुपचारैः
पृथक्पृथक् ॥ अर्घ्यपाद्यासनैर्दिव्यवस्त्रालंकरणादिभिः ॥ ४६ ॥ प्रसाद्य देवदेवं तं सौम्याकृतिधरं
विभुम् ॥ ऊचुस्ते शृण्वतां तेषां देवानां मुनयोऽखिलाः ॥ ४७ ॥ धूमो हतो यतोऽनेन धूमकेतुरिति
प्रथाम् ॥ यातु लोकत्रये देवः स्मरणात्पापनाशनः ॥ ४८ ॥ एवं वदति तत्रर्षिसमूहे स्कन्द मोदतः ॥
तावदन्तर्हितो जातो धूमकेतुर्निजेच्छया ॥ ४९ ॥ ततःप्रभृति विख्यातो धूमकेतुर्जगत्त्रये ॥ अभवत्सर्व-
पापघ्नः सर्वोपद्रवनाशनः ॥ ५० ॥ स्वं स्वं लोकं गता देवा मुनयश्च स्वमाश्रमम् ॥ सुमदामाधवौ
स्कन्द हर्षशोकभयातुरौ ॥ ५१ ॥ स्मरन्तौ देवदेवेशं धूमकेतुमहर्निशम् ॥ कृच्छ्रान्निर्गत्य गहनाद्ययतुः
स्वगृहं ततः ॥ ५२ ॥ एवं स पुत्रतामेत्य सुमदाया विनायकः ॥ अहनद्धूमदैत्यं तं त्रिलोकीपीडकं विभुः
॥ ५३ ॥ इति ते कथितं स्कन्द यत्ताभ्यां कानने कृतम् ॥ रक्षकैश्च कृतं यद्धि तदुक्तं ते समासतः
॥ ५४ ॥ अवतारश्च देवस्य षष्ठोऽयं ते मयेरितः ॥ धूमस्य निधनं चापि किमन्यच्छ्रोतुमिच्छसि ॥ ५५ ॥
इति स्कन्दपुराणे वैनायके माहात्म्ये धूमकेत्ववतारवर्णनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥

॥ स्कन्द उवाच ॥ अवतारा द्वादशेति विनायककृता मया ॥ श्रुता आसन्महादेव श्रेयासस्तत्र सप्त च
॥ १ ॥ श्रुत्वावतारान्षट्चाहं सुप्रीतस्त्वन्मुखाम्बुजात् ॥ इदानीं सप्तममपि श्रोतुमिच्छामि शंकर ॥ २ ॥
शिव उवाच ॥ आसीत्पुरा युगे स्कन्द नाम्ना त्रिपुरसंज्ञितः ॥ असुरो बलवाञ्शूरो देवदानवदर्पहा
॥ ३ ॥ तक्षकं वासुकिं शेषं जिग्ये पातालवासिनः ॥ जित्वा तान्जिह्मगान्सर्वानगमदमरावतीम्
॥ ४ ॥ मरुत्वन्तं च मरुतो जित्वा भूर्लोकमागतः ॥ जित्वाखिलांश्च राजन्यांस्त्रैलोक्याधिपतिः स्वयम्
॥ ५ ॥ बभूव देवकार्येषु स्थापयामास दानवान् ॥ अन्तरिक्षे पुरस्तिस्रः कृत्वा त्रिपुरसंज्ञया ॥ ६ ॥
ख्यातस्त्रिविष्टपे जातस्ततोऽयं कृत्तिकात्मज ॥ देवाः सर्वे भयात्तस्य प्रद्रुताः ककुभो दश ॥ ७ ॥ रत्न-
सानुगुहायां ते मीलिताः संव्यचारयन् ॥ पश्यन्ति स्म न चोपायं त्रिपुरस्य जयावहम् ॥ ८ ॥ अथ
तत्रास्मरं चाहमुपायं सर्वशंकरम् ॥ एकाक्षरं महामन्त्रं श्रुतिबीजात्मकं शुभम् ॥ ९ ॥ अनुष्ठानविधि-
युतं सऋषिच्छन्ददैवतम् ॥ ध्यायता देवदेवेशं जपता मन्त्रमुत्तमम् ॥ १० ॥ उग्रं तपश्च तपता निरा-
हारेण तिष्ठता ॥ जयता खगणं स्कन्द भस्मोरगजटाभृता ॥ ११ ॥ अनुष्ठानं मयैकान्ते बाहुलेय कृतं

तदा ॥ एकस्मिन्दिवसेऽदर्शि पाशपाणिर्मयाग्निज ॥ १२ ॥ जय सर्वज्ञ सर्वेश सर्वामरवर प्रभो ॥ दर्श-
यस्व निजं रूपमनिशं ध्यायतो मम ॥ १३ ॥ अनादिशक्तिर्जगतस्त्राणसंहारकारकः ॥ त्वमेवासि
यतो नाथ त्वामतः प्रार्थये विभो ॥ १४ ॥ स्वपदाच्च्याविता देवाः स्वर्णाद्रिमस्तके गताः ॥ प्रापणीया
त्वया देव स्वं स्वं स्थानं प्रसादतः ॥ १५ ॥ विवर्तोऽयं महाशक्तेः पञ्चभूतगणस्तव ॥ अनिर्वाच्यद्वया-
विद्यासचिवाज्जायते जगत् ॥ १६ ॥ भ्रामयस्यखिलान्वाचा कर्मकाण्डस्वरूपया ॥ अजापटलमाच्छाद्य
संसारगहनेऽनघ ॥ १७ ॥ अनेकजन्मनामन्ते प्रसादात्तव योगिनाम् ॥ त्वयि स्याद्भक्तिरचला मति-
श्चोपनिषत्सु च ॥ १८ ॥ ततो यान्ति परं धाम यत्र त्वं मोदसे विभो ॥ ममैवं स्तुवतो वक्त्रादाविरा-
सीच्चतुर्भुजः ॥ १९ ॥ पञ्चवक्त्रो दशभुजो नानालंकारभूषितः ॥ मणिमुक्ताप्रचुरेण दाम्ना साधु विरा-
जितः ॥ २० ॥ हरितस्तेजसा कुर्वन्सुप्रकाशा दशाऽपि च ॥ सुप्रसन्नहृदा दृष्टः स मया परमः पुमान्
॥ २१ ॥ अजानतेव सोऽप्रच्छि मया नाम तथागमः ॥ कुतस्त्वमागतः स्वामिन् नाम किं ते वदस्व
मे ॥ २२ ॥ श्रुत्वा गिरं मम स्कन्द मामुवाच पुमानसौ ॥ ॥ पुमानुवाच ॥ अनुष्ठानरतस्येश तवा-

स्यादागतो बहिः ॥ २३ ॥ अहमन्तर्हि सर्वेषां वसामि सर्वदा शिव ॥ गुणेश इति मे नाम स्मरणाद्-
घनाशनम् ॥ २४ ॥ क्रीडामि लीलया शंभो गुणैस्त्रिभिरहर्निशम् ॥ प्रसन्नोऽस्मि तवानेन तपसा गिरि-
जापते ॥ २५ ॥ वरान्वरय सुप्रीत्या दास्ये तानविलम्बितम् ॥ ॥ शिव उवाच ॥ अथावोचमहं
स्कन्द गुणेशं तं वरप्रदम् ॥ २६ ॥ गुणेश यदि तुष्टोऽसि देहि शक्तिमनुत्तमाम् ॥ नाशिकां त्रिपुरस्यास्य
सर्वदेवजयप्रदाम् ॥ २७ ॥ यदस्ति प्रथमं बीजं तव नामनि पूरुष ॥ ममैव वाचकं यस्माच्छक्तं मय्येव
चानघ ॥ २८ ॥ देहि तन्मे सुरश्रेष्ठ ततो हन्म्यसुरं क्षणात् ॥ इति श्रुत्वा वचो मत्तो गुणेशो माम-
थाब्रवीत् ॥ २९ ॥ ॥ गुणेश उवाच ॥ बीजदानेन मे क्लिष्टं शंभो नाम भविष्यति ॥ तत्र बीजान्तरं
क्षिप्त्वा तद्गृहाण यथासुखम् ॥ ३० ॥ ॥ शिव उवाच ॥ इति तेनोदितं श्रुत्वा प्रत्युक्तोऽसौ मया
पुनः ॥ प्रत्याहारो मयाकारि पाणिनीयं यतोऽभवत् ॥ ३१ ॥ तेषां बीजाक्षराणां च यद्बीजं प्रथमं
शुभम् ॥ वाचकं वासुदेवस्य शक्तं विष्णौ प्रभौ विभौ ॥ ३२ ॥ क्षिप्त्वाद्यवर्णं ते नाम्नि संग्रहिष्ये तवा-
ज्ञया ॥ एवं मद्गिरमाकर्ण्य मामूचे परमः पुमान् ॥ ३३ ॥ ॥ गुणेश उवाच ॥ यदस्ति हृदि ते शंभो

तत्कुरुष्व यथातथम् ॥ गृहाण बीजमाद्यं यज्जहि तेनासुरं रयात् ॥ ३४ ॥ निशम्याहं वचस्तस्य नामतो बीजमग्रहम् ॥ संक्षिप्तमपरं तत्र यद्वक्ति विष्णुसुत्तमम् ॥ ३५ ॥ ततो गणेशनाम्नायं विख्यातोऽभूज्जगत्त्रये ॥ ईशोऽयं सर्वदेवानां त्रयस्त्रिंशत्सु कोटिषु ॥ ३६ ॥ अतो नामास्य संभूतं गणेश इत्यघं दहत् ॥ उरगाणां मनुष्याणां यक्षगन्धर्वरक्षसाम् ॥ ३७ ॥ नागानामीश्वरो यस्माद्गणेशोऽतोऽभिधीयते ॥ बीजमादाय तस्मात्तदहमासं मुदान्वितः ॥ ३८ ॥ वरान्नानाविधान्मह्यं ददौ सोऽपि गणेश्वरः ॥ दत्ता वरा मयाप्यस्मै महासेन शृणुष्व तान् ॥ ३९ ॥ ऋग्वेदेऽथ यजुर्वेदे सामवेदे ह्यथर्वणि ॥ पुराणेषु च सर्वेषु रहस्येष्वागमेषु च ॥ ४० ॥ आरम्भेषु च सर्वेषु श्रौते स्मार्ते च कर्मणि ॥ नित्यनैमित्तिके काम्ये औच्चाटे चाभिचारिके ॥ ४१ ॥ मोहके वश्यके चैव लौकिके चापि कर्मणि ॥ ब्रह्मविष्णवादिभिर्देवैर्मुनिमानुषराक्षसैः ॥ ४२ ॥ गाणेशैश्चापि शैवैश्च सौरैः शाक्तैश्च वैष्णवैः ॥ असुरैर्यक्षगन्धर्वैः फणिभिः पशुयोनिजैः ॥ ४३ ॥ पूजनीयः प्रयत्नेन संपूर्णफलकाङ्क्षिभिः ॥ पूजयिष्यन्ति ये न त्वां तेषां सर्वं वृथा भवेत् ॥ ४४ ॥ इति मद्वचनस्यान्ते गणेशो मामथावदत् ॥ ॥ गणेश उवाच ॥ त्वयादायि

महद्बीजं मत्तो यच्छंकराधुना ॥ ४५ ॥ तस्य प्रयोगं वक्ष्येऽहं संहारं च शृणुष्व तम् ॥ अभिमन्त्र्य शरं तेन त्रिशूलं वा सदाशिव ॥ ४६ ॥ जप्त्वा शत्रुं जहीत्येवं संप्रयोगे ततः क्षिपेत् ॥ जप्त्वा त्रिवारमेहीति ततस्तमुपसंहरेत् ॥ ४७ ॥ य एवं कुरुते भर्ग स जयी स्याद्रणाजिरे ॥ ॥ शिव उवाच ॥ व्याहृत्यैवं गिरं तत्र गणेशोऽन्तर्दधे क्षणात् ॥ ४८ ॥ अन्तर्हितेऽथ देवेशे दशबाहौ गणेश्वरे ॥ ततोऽहमगमं योद्धुं त्रिपुरेण षडानन ॥ ४९ ॥ युध्यता चिरकालेन तेन सार्धं दिनेदिने ॥ तदुक्तविधिना युद्धे त्रिशूलेन हतो मया ॥ ५० ॥ भस्मसादभवद्दैत्यस्त्रीणि तत्पत्तनानि च ॥ त्रिपुरारिरिति ख्यातिं ततो नाम ममाप्यभूत् ॥ ५१ ॥ सप्तमोऽयं मयाख्यायि विनायककृतोऽनघ ॥ अवतारः कार्तिकेय सर्वाघशमनः परः ॥ ५२ ॥ एवं नानावतारान्स धृत्वा पालयते जगत् ॥ मम तस्यापि विष्णोश्च शक्तेः सूर्यस्य षण्मुख ॥५३॥ उत्कर्षं वापकर्षं वा भक्त्या द्वेषेण यो वदेत् ॥ स याति दारुणान्स्कन्द निरयानेकविंशतिः ॥ ५४ ॥ विनायकस्य माहात्म्यं य इदं शृणुयान्नरः ॥ सर्वपापविनिर्मुक्तो लभते मोक्षमुत्तमम् ॥ ५५ ॥ एककालं द्विकालं वा त्रिकालं य इदं पठेत् ॥ शृणोति श्रद्धया युक्तो ध्यात्वा देवं विनायकम् ॥ ५६ ॥

स सर्वानाप्नुयात्कामान्पूज्यः स्यात्रिदशैरपि ॥ गोप्रचारे हरिद्वारे गङ्गासागरसंगमे ॥ ५७ ॥ कुरुक्षेत्रे
प्रयागे च तथा बदरिकाश्रमे॥मथुरायां प्रभासे च स्नात्वा यत्प्राप्नुयात्फलम् ॥ ५८॥ तदस्य श्रवणादेव
फलं तु नर आप्नुयात् ॥ स्वर्णभारसहस्राणि चन्द्रसूर्योपरागयोः ॥ ५९ ॥ कृत्वा समन्त्रकं स्नानं संतर्प्य
मुनिमानुषान् ॥ पितृन्देवांश्च संपूज्य यो ददातीह भक्तितः ॥ ६० ॥ यत्फलं जायते तस्य श्रवणादस्य
तद्भवेत् ॥ न यज्ञैर्नाखिलैर्दानैर्न व्रतैः प्रीयते तथा ॥६१॥ यथास्य श्रवणात्स्कन्द संतुष्टः स्याद्विनायकः ॥
लेखयित्वा गृहे यस्तु स्कन्देदं स्थापयेन्नरः ॥ ६२ ॥ नाग्निचोरभयं तत्र स्थिरा विष्णुप्रिया भवेत् ॥
नभश्चतुर्थीमारभ्य विनायकचरित्रकम् ॥ ६३ ॥ शुचिर्भूत्वा पठेन्नित्यं यावद्भाद्रचतुर्थिका ॥ कृत्वा स-
मण्डपं कुण्डं मेखलायोनिकण्ठयुक् ॥ ६४ ॥ अथवा स्थण्डिलं वापि दशांशेन हुनेत्ततः ॥ हुत्वा पूर्णा-
हुतिं पश्चादाचार्यप्रति पूजयेत् ॥ ६५ ॥ दद्याद्वस्त्राण्यलंकारान्सवत्सां गां पयस्विनीम् ॥ दक्षिणां च
यथाशक्ति द्विजेभ्यो भूरिदक्षिणाम् ॥ ६६ ॥ रात्रौ जागरणं कुर्याद्भक्तियुक्तेन चेतसा ॥ पञ्चम्यां
भोजयेद्विप्रान्युग्ममेकं च भोजयेत् ॥ ६७ ॥ विधानं यः करोत्येवं विनायकमुदावहम् ॥ प्रसादाद्विघ्न-

राजस्य वाक्सिद्धिस्तस्य जायते ॥ ६८ ॥ पुत्रान्पौत्रान्स आप्नोति नानाभोगान्यथेप्सितान् ॥ त्रैलोक्ये कीर्तिरचला भक्तिर्लक्ष्मीश्च वर्धते ॥ ६९ ॥ ज्वरदाहयुतस्येदं श्रावयेच्छुचिमानसः ॥ ऐकाहिको द्व्याहिको वा तथा चातुर्थिको ज्वरः ॥ ७० ॥ ज्वरश्च विषमो यस्तु तथा त्रिदिवसज्वरः ॥ शमं याति श्रुतेरस्य तथा नवज्वरोपि च ॥ ७१ ॥ दुर्गे कारागृहे राजबन्धने रिपुसंकटे ॥ मार्गे च विषमे स्कन्द वने दावाग्निसंकुले ॥ ७२ ॥ सिंहव्याघ्रवृकैर्वन्यगजैर्वापि वृतो वने ॥ वादे विजययात्रायां तथा मृत्युभयेषु च ॥ ७३ ॥ ग्रहाणां चैव पीडासु दुःस्वप्नस्यापि दर्शने ॥ जले ग्रामे गृहे तिष्ठंश्चण्डवायौ च नौषु च ॥ ७४ ॥ संकटेषु च सर्वेषु परचक्रभयेषु च ॥ विनायकस्य माहात्म्यमिदं श्रुत्वा हि तत्क्षणात् ॥ ७५ ॥ उपद्रवेभ्यः सर्वेभ्यो मुक्तो भवति मानवः ॥ नित्यं यः शृणुयाद्भक्त्या माहात्म्यं स्कन्द सुव्रतः ॥ ७६ ॥ धर्मार्थकाममोक्षाणां जायते भाजनं नरः ॥ निष्कामः पठनादस्य ब्रह्मीभूतो भवेन्नरः ॥७७॥ विद्यार्थी लभते विद्यां ज्ञानार्थी ज्ञानमाप्नुयात् ॥ वर्षाकाले महापूजा वार्षिकी क्रियते नरैः ॥ ७८ ॥ तस्यामिदं प्रयत्नेन शृणुयाद्देवतुष्टये ॥ यत्कृतं ब्रह्मणा स्तोत्रं तत्पठेद्विघ्नशान्तये ॥ ७९ ॥ या कृता

गणदैत्येन स्तुतिर्देवप्रसादिका ॥ तस्याः स्मरणमात्रेण प्रसन्नः स्याद्विनायकः ॥ ८० ॥ दुःखप्रशमनस्तोत्रं देवैर्यद्धि पुरा कृतम् ॥ विनायकस्य तत्प्रीत्यै पठेद्दुःखस्य मुक्तये ॥८१॥ मत्कृतस्तोत्रपाठेन विजयो जायते नृणाम् ॥ मुच्यन्ते पितरस्तस्य शृणुयाच्छ्रावयेदिदम् ॥ ८२ ॥ अयं गोप्यतमः स्कन्द महिमा ते मयेरितः ॥ यत्नात्संगोपनीयश्च गुरोरपि पुरः प्रिय ॥ ८३ ॥ ॥ व्यास उवाच ॥ शिवेन गदितो विप्राः स्कन्दाय पृच्छतेऽखिलः ॥ वैनायकोऽयं महिमा स भवद्भ्यो निवेदितः ॥ ८४ ॥ इति श्रीस्कन्दपुराणे विनायकमाहात्म्ये स्कन्दशंकरसंवादे गणेशावतारवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥



इदं पुस्तकं पणशीकरोपाह्वलक्ष्मणतनुजनुषा वासुदेवशर्मणा संशोधितं
तच्च मुंबय्यां निर्णयसागरे तदधिपतिना तुकाराम जावजी
इत्यनेन मुद्रयित्वा प्राकाश्यं नीतम्। सन १९०६

॥ इति विनायकमाहात्म्यं समाप्तम् ॥

